श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौ[illegible]-संस्कृतग्रन्थमाला मञ्जुलदर्शना।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः ४२३-४२४

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

THE

# CHOWKHAMBĀ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

No's. 423-424.




THE

# S'RĀDDHA CHANDRĪKĀ




BY

S'RIDIVĀKARA BHAṬṬA

*Edited by*

PANDIT S'RĪ VIS'NŪPRASĀDA BHANDĀRĪ

*BENARES.*

JAI KRISHNADAS-HARIDÂS GUPTA,

*The Chowkhamba Sanskrit Series Office.*

1934.



श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः ४२३-४२४



Printed by, Jai Krishna Das Gupta
Vidya Vilas Press, Benares City.

1934.

॥ श्रीः ॥

चौखम्बा–संस्कृत–ग्रन्थमाला।

( ग्रन्थ-संख्या ७६ )

( सी० नं० ४२३-४२४ )

# श्राद्धचन्द्रिका

पण्डितप्रवरश्रीदिवाकरभट्टविरचिता।

नेपालाभिजन—

पण्डितश्रीविष्णुप्रसादभण्डारिणा

संशोधिता।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा-संस्कृत-सीरिज़ आफिस,

बनारस सिटी।

१९९१.



# भूमिका ।

अथैष श्राद्धचन्द्रिकाख्यः प्रबन्धः पण्डितवरश्रीदिवाकरभट्टनिर्मितः सम्मुद्रय प्रकाशयितुमुपक्रम्यते । अत्र च प्रतिपाद्यविषयावगतिर्ग्रन्थनाम्नैव व्यक्तीभवति। सङ्क्षेपेण श्राद्धप्रशंसा-श्राद्धलक्षण-श्राद्धकाल-श्राद्धाधिकारि-श्राद्धोपयोगिद्रव्य-श्राद्धप्रयोगादिकं सम्यक्तया विवृतमस्ति । बह्वृक्शाखानुसारिण्येव पद्धतिर्ग्रन्थकृतान्तरङ्गीकृता । पार्वणैकोद्दिष्टसपिण्डीकरणादिश्राद्धानि सुविवेचितानि अन्ते शय्यादानविधिस्तत्सामग्री तत्प्रयोगश्च सम्यक्तया विनिवेशिताऽस्ति । लेखसरणिः सरला सुव्यक्ता च । स्वल्पोऽप्ययं प्रबन्धः श्राद्धविषये सूपयोग्यपेक्षितविषयजातस्याविकलरूपेणोपदर्शकतयावश्यमुपादेयः श्राद्धतत्त्वविविदिषूणां श्राद्धमर्मज्ञानां च विदुषामित्यत्र नास्ति सन्देहलेशावसरः ।

अनेन च विदुषा महान् शास्त्रसुधानिधिर्नाम निबन्धो विरचितः । तस्य च सूर्यादिपञ्चायतनप्रतिष्ठापद्धतिः, तिथ्यर्कः, आचारार्कः, श्राद्धचन्द्रिका, दानहीरावलीप्रकाशः, प्रायश्चित्तमुक्तावली, अन्त्येष्टिप्रकाश इति सप्त भागाः सन्ति । तेष्वेवान्यतमोऽयं भागः श्राद्धचन्द्रिका ( श्राद्धचन्द्रिकाप्रकाशः ) इति ।

स्वकीयैतिह्यं तु सङ्क्षेपेण ग्रन्थकर्त्रा ग्रन्थान्ते स्वयमेवोपनिबद्धम् । यथा—

भारद्वाजकुलोदधौ समभवच्छ्रीबालकृष्णाभिधः
सामा लाञ्छनवर्जितः प्रतिदिनं सन्तोषकृद्विद्वताम् ।
तत्सूनुः प्रथमो महामणिरिव श्रीमान् महादेव इ-
त्यासीच्छैवपुरे विमुक्तिफलदे गङ्गातरङ्गाकुले ॥
तत्पुत्रेण दिवाकरेण विदुषा निष्पादितां चन्द्रिकां
त्यक्त्वाहङ्कृतिमुन्नतां स्वमनसः सम्पश्यताहो बुधाः ।
यद्यस्ति स्वयमेतदीयकृतितो वाच्यः कथं निर्णय-
स्तद्द्चैवं निपुणं विभाव्य हृदये दूष्यं वचो मामकम् ॥

तिथ्यर्के च—

भारद्वाजकुलेऽमले समभवच्छ्रीबालकृष्णाभिधः
साहित्यामृतवारिराशिरतुलः सर्वद्विजानां गुरुः ।
तत्सूनुः प्रथमो महामणिरिव प्रख्यातकीर्तिर्गुणै-
र्जातो न्यायनये बृहस्पतिसमो नाम्ना महादेवकः ॥
तत्पुत्रेण दिवाकरेण विदुषा श्रीनीलकण्ठप्रभो-
र्दौहित्रेण बुधैः सुधारससमास्वाद्यः परेषां कृते ।
तिथ्यर्कः क्रियते प्रणम्य पितरं बालां तथा मातरं
श्रीकान्तं तपनं श्रियं पशुपतिं वाचं महादेवताम् ॥ इति ।

एवं च भुवनविदिते निर्मले भारद्वाजकुले श्रौतस्मार्तक्रियाकलापपरिशीलनपूतान्तःकरणः साहित्यपारावारपारीणः पण्डितशिरोमणिर्भूदेवाग्रणीः श्रीबालकृष्णः समजनि । तत्सूनुर्विपश्चिदपश्चिमो नैयायिकाग्रणीर्महादेवभट्टो बभूव। तत्सूनुर्दिवाकरभट्टः पण्डितप्रकाण्डभट्टकुलावतंसश्रीनीलकण्ठस्य दौहित्रः । जननी चास्य बालानाम्नीति समायाति । अस्य पितामहेन श्रीबालकृष्णविदुषा तिथिनिर्णयाख्यः प्रबन्धो विरचित इति श्रूयते । अस्य पित्रा महादेवभट्टेन न्यायसिद्धान्तमुक्तावल्या न्यायसिद्धान्तमुक्तावलीप्रकाशाख्या व्याख्या मुक्तावलीदीपिका, मुक्तावलीकिरणः, दिनकरीयमित्यादिनामभिर्व्यवह्रियमाणा विरचयितुमारब्धा मरणेन बलवद्विघ्नान्तरेण वा विहतयत्नतया उपमानखण्डान्तमेव निर्मातुं पारितम् । पितृप्रारब्धव्याख्याया अपूर्त्या पितृकीर्तेर्जनतायाश्च क्षतिं सम्भावयता तत्कनिष्ठसूनुना दिनकरभट्टेनावशिष्टभागस्यापि व्याख्या समपूरि । सा च साम्प्रतं दिनकरीयमिति व्यवह्रियते । व्याख्याप्रारम्भे महादेवभट्टकृतं मङ्गलं यथा–

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं<br>
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवस्याम्बुजम् ।<br>
ज्ञात्वाशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-<br>
गूढार्थांस्तनुते यथामति महादेवः परेषां मुदे ॥ इति ।

समाप्तौ च दिनकरकृतमङ्गलपद्यं यथा--

भानुं प्रणम्य परिभाव्य च शास्त्रसारं<br>
मुक्तावलीकिरण एष पितृप्रदिष्टः ।<br>
सद्युक्तिभिर्दिनकरेण करेण सोऽयं<br>
नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु ॥

अस्मादपि समवगम्यते पितृप्रदिष्टः कश्चिदेवांशो दिनकरेण निर्मितो न कृत्स्नो ग्रन्थ इति । एवं च ये महादेवभट्टस्यैवोपनाम दिनकर इत्यासीदिति प्रलपन्ति तद्भ्रान्तिमूलकमेवेत्यत्र नास्ति सन्देहलेशः ।

अस्य च मातामहो मीमांसकाग्रणीः श्रीनीलकण्ठपण्डितो विद्वन्मण्डलीविदिततरयशा आसीत् । को वा न जानाति तं विद्वद्धौरेयम् । येन—(१) संस्कारमयूखः(२) आचारमयूखः(३) समयमयूखः(४) श्राद्धमयूखः(५) नीतिमयूखः(६) व्यवहारमयूखः(७) दानमयूखः(८) उत्सर्गमयूखः(९) प्रतिष्ठामयूखः(१०) प्रायश्चित्तमयूखः(११) शुद्धिमयूखः(१२) शान्तिमयूख इति द्वादशमयूखा विद्वन्मान्या धर्मशास्त्रे विरचिताः । एतदीयेतिवृत्तं तु अच्युतग्रन्थमालायां मुद्रितस्य तिथ्यर्कस्योपोद्घाते सुविवृतमस्तीति तत एवावसेयमैतिह्यरसिकैः ।

अयं च प्रकृतग्रन्थकर्ता वाराणसीनिवास्यासीत् । अत्रैव ग्रन्थान्ते—तत्सूनुः प्रथमो महामणिरिव श्रीमान् महादेव इत्यासीच्छैवपुरे विमुक्तिफलदे गङ्गातरङ्गाकुले । इति स्वपितुर्वाराणसीवास्तव्यत्वप्रतिपादनेन, दानहीरावलीप्रकाशे—मीमांसानयकोविदः पुरभिदः क्षेत्राधिवासी सुधीः । इति कथनेन च सुव्यक्तमवगम्यते ।

अस्य च द्वौ पुत्रावास्ताम् । ज्येष्ठः श्रीरामनाम्ना प्रसिद्ध आसीत् कनिष्ठस्तु वैद्यनाथ ( बैजनाथ ) इति नाम्ना ख्यातः । अनेन च प्रायः पितृकृतग्रन्थेष्वनुक्रमणिका विलिखितास्ति । अस्यां च श्राद्धचन्द्रिकायां विलिखितमस्ति तावत्—

दिवाकरतनूजेन वैद्यनाथेन धीमता ।
श्रीश्राद्धचन्द्रिकाग्रन्थे रम्ये तातविनिर्मिते ॥
विषयानुक्रमः सर्वः कथ्यते श्लोकमालया ।
इत्थं दिवाकरसुतेन कनीयसा श्री-
रामानुजेन गुरुभक्तिपरायणेन ।
श्रीतातपादरचिते सुजनप्रियेऽस्मिन्ग्रन्थे
क्रमो विलिखितः सवितुः प्रसादात् ॥ इति ।

दानचन्द्रिकाकारो दिवाकरोऽस्माद्भिन्न एव । यद्यपि तत्पितुर्नामापि महादेव एव, तथापि तत्पितामहो रामेश्वरभट्ट इति । स च न भारद्वाजोपनामा किन्तु कालोपनामकः । तत्प्रणीता ग्रन्थास्तावदिमे(१) दानचन्द्रिका(२) आन्हिकचन्द्रिका(३) कालनिर्णयचन्द्रिका(४) स्मार्तप्रायश्चित्तोद्धारः(५) स्मार्तप्रायश्चित्तपद्धतिः(६) पतितत्यागविधिः(७) पुनरुपनयनप्रयोग इति ।

तृतीयो दिनकरभट्टस्य पुत्रो दिवाकरभट्टः दानदिनकराख्यग्रन्थस्य कर्ता ।

त्रिवेणीपद्धतिनामकप्रबन्धकर्ता चतुर्थो दिवाकरभट्टः ।

श्राद्धचन्द्रिकाकर्तारश्च दिवाकरातिरिक्ता नन्दनपण्डित–रामचन्द्रभट्ट–रुद्रधर–श्रीनाथ–आचार्यचूडामण्याद्या अनेके विद्वांसोऽभूवन् इत्यादि काणेकृतधर्मशास्त्रेतिहासे वर्तते । तत्रैव च प्रकृतश्राद्धचन्द्रिकाया निर्माणसमयः १६८० खीष्टाब्दीय इति लिखितमस्ति ।

परं तिथ्यर्कसमाप्तौ—

श्रीबालकृष्णात्मजसूनुनिर्मितां
वर्षे खवेदाश्वहिमांशुसंयुते ।
कृतिं विलोक्याखिलकालनिर्णयं
निःशङ्कमाशंसतु पण्डितो जनः ॥

इति ग्रन्थकृता स्वयमुल्लिखनात् १७४० विक्रमसम्वत्सरस्तिथ्यर्कविरचनसमय इत्यवसीयते । तदा खीष्टाब्दश्च १६८३ पर्यवस्यति । तिथ्यर्के च-

"मलमासे श्राद्धं कार्यं नवेति विचारो विस्तरेण वक्ष्यते श्राद्धचन्द्रिकाप्रकाशे" ( ति० पृ० २५२ ) "विवेचयिष्यते चैतत्पष्टं श्राद्धचन्द्रिकाप्रकाशे" ( ति० पृ० २६० ) इति लेखदर्शनेन 'वक्ष्यते' 'विवेचयिष्यते' इति भविष्यत्कालनिर्देशात् तिथ्यर्कानन्तरमेव श्राद्धचन्द्रिका विरचितेति व्यक्तमेवावधारयितुं शक्यते । अस्ति चान्या कृतिरस्य ग्रन्थकृतो वृत्तरत्नाकरटीका वृत्तरत्नाकरादर्श इति । तत्राप्यवसाने स्वाभिजनोल्लेखपूर्वकं ग्रन्थकृता—

पूर्णाब्धिसप्तैकमिते प्रवर्षे सत्कार्तिके मासि विशुद्धपक्षे ।
तार्तीयपूर्णे दिवसे सुपुण्ये ह्यादर्श इत्थं घटितः समाप्तः ॥

इति लिखनात् एकस्मिन्नेवाब्दे १७४० वैक्रमे तिथ्यर्कौ वृत्तरत्नाकरादर्शश्चेति द्वयं समापितमिति प्रतीयते । अतश्च काणेमहाशयेन किं वा प्रमाणमास्थाय श्राद्धचन्द्रिकाविरचनकाल उपरिनिर्दिष्टः १६८० खी० लिखित इत्यवगन्तुं न पार्यते ।

एवं च तिथ्यर्कादनन्तरसमय एव १७४१।१७४२ वा वैक्रमाब्दे श्राद्धचन्द्रिकाया विरचनमिति निश्चप्रचम् ।

अत्र च ग्रन्थकृता तत्र तत्र विवादास्पदेषु स्थलेषु मातामह–मातुः प्रपितामह––मातुः वृ० प्रपितामहादिपदैः श्रीनीलकण्ठ–श्रीरामकृष्णभट्ट––श्रीनारायणभट्टादीनामेवोक्तिः प्रमाणत्वेनावलम्बिता ।

तदेवं प्रत्नानां दुर्लभप्रायाणामीदृशानां निबन्धरत्नानां प्रकाशने बद्धपरिकरेण श्रीजयकृष्णदासगुप्तमहाशयेनास्याः श्राद्धचन्द्रिकायाः संशोधने सप्रश्रयमभिहितोऽहं प्रावर्तिष्येतच्छोधनकर्मणि । आदर्शपुस्तकं चास्या नेपालाभिजनकाशीनिवासिन आर्यालोपनामकपण्डितश्रीगजराजकेशरिणः सकाशात् स्वर्गीयगुरुचरणैः म० म० पर्वतीयनित्यानन्दशास्त्रिभिः सङ्गृहीतमेकमेव नातिशुद्धं प्राचीनतरं सम्पूर्णमुपलब्धम् । कतिपयमुद्रणानन्तरं च काशिकधर्माधिकारिपण्डितश्रीलक्ष्मीधरपन्त·····सकाशादपरं नातिशुद्धं सम्पूर्णम् । विशदविषयानुक्रमणिकया अत्र प्रमाणत्वेनोद्धृतानां ग्रन्थानां सूच्यादिनिवेशनेन च सपरिश्रमं सम्यक् परिशोधितेऽप्यत्र ग्रन्थे मानुष्यकनान्तरीयकमतिदोषेण शीशाक्षरयोजकानवधानतया च समुद्भूतानि स्खलितानि मर्षयित्वा प्रकटयिष्यन्ति निजां गुणैकपक्षपातितां प्रेक्षावतां धुरीणाः । प्रसीदतां चानेन व्यापारेण जनहृदयतत्त्वसाक्षी भगवान् काशिकापुराधीशः श्रीविश्वेश इत्याशास्ते–

१९९१ वैक्रमेऽब्दे शुद्धवैशाख-
कृष्णपक्षे बुधे पञ्चम्याम् ।

विदुषां विधेयः
**श्रीविष्णुप्रसादभण्डारी ।**

# अथ श्राद्धचन्द्रिकाया विषयानुक्रमः ।

# श्राद्धचन्द्रिकायास्त्रुटिपूरणम् ।



पृ० १२३ पङ्क्तौ २३ पितामहचरणैरित्यनन्तरम्–वस्तुतस्तु नित्यसंयोगविरोधात्तिथौ मासिकापकर्षविधानाभावाद्वाचनिकस्य वृद्धितन्त्रग्रहणस्य बलवत्त्वाच्च सर्वकर्माङ्गके वृद्धिश्राद्धे मासिकापकर्षो युक्त आभाति इत्यधिकः पाठो द्वि पु० ।

पृ० १२४ पङ्क्तौ १ इति शाट्यायनिस्मरणात् इत्यनन्तरम्-नन्विमानि कथं प्रेतश्राद्धानि, सपिण्डीकरणस्य निवृत्तत्वादिति चेन्न, न ।

अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वमिह तस्यापि विज्ञेयं वत्सरं नृप !॥

इत्यग्निपुराणवचनात् । एतानि च यद्यपि वार्षिकसम्प्रदायेनैकोद्दिष्टानि पार्वणानि च सम्भवन्ति । तथापि प्रेतत्वविमोक्षार्थान्येव मन्त्रवन्ति कार्याणि न त्वमन्त्रकाणि पूर्ववत् ।

नवश्राद्धमतिक्रम्य मृताहनि तु मासिकम् ।
प्रेतमुद्दिश्य मन्त्रैस्तु वत्सरं निर्वपेत्सुतः ॥

इत्यपरार्के पैठीनसिवचनात् । एवं वृद्धिप्रसक्तावुदकुम्भश्राद्धान्यप्यपकृष्य कार्याणि ।

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं द्विजः ॥

इत्यपरार्के पैठीनसिवाक्ये सर्वपदसङ्ग्रहणात् । अत्रेत्थं साङ्क्षिप्तः प्रयोगः । प्राचीनावीती पितॄनुद्दिश्यास्मत्कुले वृद्धिश्राद्धोत्तर-

मुदकुम्भश्राद्धनिषेधादद्यप्रभृति वर्षसमाप्तिदिनपर्यन्तान्युदकुम्भश्राद्धान्यपकृष्य पार्वणविधिना तन्त्रेण सोदकुम्भान्नेनामान्नेन तन्निष्क्रयेण वा करिष्य इति सङ्कल्प्य सङ्ख्यया परिविष्य प्रोक्ष्य नानापात्रस्थितान्यन्नान्यामान्नानि वा तन्निष्क्रया वा पितृपितामहप्रपितामहेभ्योऽमुकशर्मभ्यो वसुरुद्रादित्यस्वरूपेभ्योऽर्पितानि नानानामगोत्रेभ्योऽर्पितानि नानानामगोत्राणां ब्राह्मणनामातृप्तेः स्वधा कव्यं न ममेति सदक्षिणं दद्यात् इति ग्रन्थस्त्रुटितोऽस्ति ।

पृ. १३४ पं. ८ श्रीमातामहगुरुचरणैरित्यनन्तरम्-पतितपितृकेण कथमुल्लेखः कार्य इत्यत आह **मण्डनः**—

पितुर्नाम न निर्देश्यं महापातकदोषिणः ।
आवेदनादिकार्येषु किन्तु तत्परभाविनाम् ॥
पितामहपुरोगाणां त्रयाणां नाम निर्दिशेत् ।
पितामहोऽपि दुष्टश्चेत्प्रपितामहपूर्वकाः ॥
निर्देष्टव्यास्त्रयो मर्त्यास्तस्मिन्नपि च दूषिते ।
प्रपितामहपित्राद्यास्त्रयो वाच्या यथाक्रमम् ॥
दुष्टश्चेन्मध्यमः कश्चित्तद्वर्जं पूर्वपश्चिमान् ।
त्रीनेव निर्दिशेन्मर्त्यान् किन्त्वत्रैतद्विशिष्यते ॥
पितामहादित्रितये पित्रादित्रयभावना ।
अन्यादृशोऽपि सम्बन्धनिर्देशस्त्वेवमेव हि ॥
मात्रादीनामिदं स्त्रीणां योजनीयमशेषतः । इत्यधिकः पाठो द्वि० पु० ।

# अथ श्राद्धचन्द्रिका।

श्रीगणेशाय नमः ॥

जानकीनयनयुग्मगोचरं मानिनां नयनयोरगोचरम् ।
नीलमेघरुचिरच्छविं सदा भावये मनसि राघवं मुदा ॥१॥
यत्कीर्त्या धवलीकृतं त्रिभुवनं नाम्ना जगत्पावितं
यन्मूर्त्या विनिवारितं बहुतरं पापं महापापिनाम् ।
यद्ग्रन्थैः कठिनं जगाम कृशतां द्वैतं व्रतादिस्थले
तस्याहं शिरसा नमामि चरणौ श्रीनीलकण्ठप्रभोः ॥२॥
नत्वा साम्बं तथा तातं जनयत्रीं गुरूनपि ।
दिवाकरेण विदुषा तन्यते श्राद्धचन्द्रिका ॥ ३ ॥

तत्रादौ श्राद्धप्रशंसा हेमाद्रौ कूर्मपुराणे—
योऽनेन विधिना श्राद्धं कुर्याद्वै शान्तमानसः ।
व्यपेतकल्मषो नित्यं याति नावर्त्तते पुनः ॥

विष्णुधर्मोत्तरे—
श्राद्धकाले ताथान्नेन पिण्डानिर्वपणं तथा ।
पितॄणां ये करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥
पैतृपैतामहः पिण्डो वासुदेवः प्रकीर्त्तितः ।
पैतामहश्च निर्दिष्टस्तथा सङ्कर्षणः प्रभुः ।
पितृपिण्डस्तु विज्ञेयः प्रद्युम्नश्चापराजितः ॥
आत्मानिरुद्धो विज्ञेयः पिण्डनिर्वपणे बुधैः । इति ।
पितृपितामहस्यायं पैतृपैतामहः प्रपितामहपिण्ड इत्यर्थः
तत्रैव देवलः,
देवो यदि पिता जातः शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥

वायुपुराणे—

देवकार्यादपि सदा पितृकार्यं विशिष्यते ।
देवताभ्यः पितृणां हि पूर्वमाप्यायनं शुभम् ॥ इति ।

## अथ श्राद्धलक्षणम् ।

माधवीये ब्रह्माण्डपुराणे—

देशे काले च पात्रे च श्रद्धया विधिना तु यत् ।
पितृनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥ इति ।

हेमाद्रौ बृहस्पतिस्मृतावपि—

संस्कृतं व्यञ्जनाढ्यं च पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥(१)

(१) अत्र श्राद्धलक्षणं प्रकृत्य वीरमित्रोदयीयश्राद्धप्रकाशे सुविचारितम् । सूपयोगितयाऽविकलः स सन्दर्भः समुपस्थाप्यते । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच, प्रजानिःश्रेयसार्थं तत्र पितरो देवताः, ब्राह्मणस्त्वाहवनीयार्थे, मासि मासि कार्यमपरपक्षस्यापराह्णः श्रेयान् इत्यापस्तम्बः । श्राद्धमिति शब्दो वाचको यस्य तत्तथा । त्यक्तद्रव्यप्रतिपत्त्यधिकरणत्वेनाहवनीयकार्यार्थत्वं ब्राह्मणस्य । अपरपक्षस्य कृष्णपक्षस्य इति तदर्थः । तथा "प्रेतान् पितॄनप्युद्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम्" ॥ इति मरीचिवचनम् । प्रेतान्=अकृतसपिण्डीकरणान् । पितॄन्=कृतसपिण्डनान । दीयते यत्तु=अत्र यदिति क्रियाविशेषणम् । तथाच तादृशं यद्दानं तच्छ्राद्धमित्यर्थः । एवं चात्रोक्तापस्तम्ब-मरीचि-बृहस्पति-ब्रह्म-पुराणीयवचनानां पर्यालोचनया प्रमीतमात्रोद्देश्यकान्नत्यागविशेषो ब्राह्मणाद्यधिकरणकप्रतिपत्त्यङ्गकः श्राद्धपदवाच्यः प्रतीयते । एवं च गन्धादिदानाग्नौकरणविकिरदानानां न श्राद्धत्वं किन्तु तदङ्गत्वमेवेति ध्येयम् । ब्राह्मणप्रतिपत्तेरङ्गत्वं च क्काचित्कं विवक्षितम् । तेनाग्न्यादिप्रक्षेपाङ्गके नाव्याप्तिः । तदङ्गत्वं च वाचनिकातिदेशव्यतिरिक्तप्रमाणविहितं ग्राह्यम् । तेन "पिण्डवच्च पश्चिमा प्रतिपत्तिः" इतिच्छन्दोगवचनातिदिष्टतदङ्गके पित्र्यबलिदाने नातिव्याप्तिः । न च तच्छ्राद्धत्वेन कुतो न सङ्गृह्यत इति वाच्यम् । "श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलि-

तत्पञ्चविधमित्याह—

**आश्वलायनः,**

काम्यं नैमित्तिकं वृद्धिरेकोद्दिष्टं च पार्वणम् ।
श्राद्धं पञ्चविधं प्राहुर्विप्राः शास्त्रस्य वेदिनः ॥ इति ।

**विश्वामित्रस्तु** तस्य द्वादशभेदानाह—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ इति ।

---

रथापिवा ।" इति च्छन्दोगपरिशिष्टस्वरसात्तस्य श्राद्धभिन्नत्वप्रतीतेः तथा शिष्टव्यवहाराभावाच्च । पिण्डपितृयज्ञस्तु श्राद्धमेव । "तच्छ्राद्धमितरदमावास्यायाम्" इति गोभिलवचनेन तस्यापि श्राद्धत्वोक्तेः । तच्छब्देन पिण्डपितृयज्ञपरामर्शात् । उदाहृतवाक्यैरपि तस्य श्राद्धत्वप्रतीतिः । "पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा" इत्यनेन याज्ञवल्क्यवचनेन तस्यापि ब्राह्मणप्रतिपत्त्यङ्गकत्वसिद्धेः । प्रमीतानामुद्देश्यत्वं च देवतात्वरूपम् । तेन फलभागितया तदुद्देश्यकब्राह्मणसम्प्रदानकान्नत्यागे नातिव्याप्तिः । अन्नपदस्य च भोज्यस्थानीयद्रव्योपलक्षकत्वान्न हिरण्यश्राद्धादावव्याप्तिः । यत्तु नृसिंहपुराणे— "दिव्यपितृभ्यो देवेभ्यः स्वपितृभ्यस्तथैव च । दत्त्वा श्राद्धमृषिभ्यश्च मनुष्येभ्यस्तथात्मनः ॥" इति देवादिश्राद्धे श्राद्धशब्दः समासाग्निहोत्रवद्गौणस्तद्धर्मप्राप्त्यर्थः । एवं च "दैविकं दशमं स्मृतम्" इतिवक्ष्यमाणश्राद्धविभागोऽपि गौणमुख्यसाधारण एव । नच तत्रापि मुख्यता किं न स्यादिति वाच्यम् । श्राद्धपदव्युत्पादकेषूदाहृतवाक्येषु प्रेतपदपितृपदयोरेव श्रवणात्प्रमीतमात्रकोद्देश्यकश्राद्धस्यैव मुख्यत्वावगमात् । एवं चान्नोत्सर्गपिण्डदानयोर्द्वयोरपि प्रत्येकं श्राद्धत्वं सिद्ध्यति । अत एव ब्रह्मपुराणेऽन्नोत्सर्गमुक्त्वा "श्राद्धं कृत्वा प्रयत्नेन" इत्यन्नोत्सर्गमात्रे श्राद्धपदप्रयोगो दृश्यते । अत एवाहिताग्नेः 'पित्रर्चनं पिण्डैरेव' इति निगमोऽप्यशक्तौ केवलं पिण्डदानमाह । मघाश्राद्धादौ पिण्डदानं विना श्राद्धसिद्धावपि न तस्य प्राधान्यहानिः । प्रधानस्यैव सतो वचनेन तत्र पर्युदासात् ।

एषां लक्षणानि भविष्यपुराणे—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टं च यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्त्तव्यमयुग्मान्भोजयेत् द्विजान् ॥

---

एतेन-"नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्" इतिहारीतवचनान्नित्यश्राद्धे, "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम् । तत्रापि महती पूजा कर्तव्या पितृदैवते ॥ ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् ।" इति देवीपुराणान्मघाश्राद्धे च पिण्डदाननिषेधोऽवगम्यते । न चाप्राप्तस्य निषेधो घटते, प्राप्तिश्चात्रातिदेशेन, सचाङ्गानामेवातः पिण्डदानमङ्गम् । या तु-"अग्नौ हुतेन देवस्थाः पितृस्था द्विजतर्पणैः । नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि ॥" इति पिण्डदाने फलश्रुतिः सोऽर्थवादः । "अङ्गेषु स्तुतिः परार्थत्वात्" इति न्यायात् । गयादौ पिण्डदानमात्रविधिस्तु अङ्गभूतपिण्डदानात्कर्मान्तरं प्रकरणान्तरस्थत्वादिति शूलपाण्याद्युक्तं परास्तम् । पूर्वोदाहृतवाक्यार्थपर्यालोचनया उभयोरपि प्राधान्ये सिद्धे नित्यश्राद्धादौ श्राद्धविधिनैवोभयप्राप्तावेकतरपर्युदासोपपत्तेः । तस्मात्सुष्ठुक्तमन्नोत्सर्गपिण्डदानयोः प्राधान्यमिति ।

केचित्तु "अग्नौ हुतेन" इत्यादिवचनेऽग्नौकरणस्यापि फलश्रवणात्तदपि प्रधानम् अग्नौकरणोद्देश्यानां कव्यवाहनादीनां पितृपदेन सङ्ग्रहात्पाणिहोमपक्षे ब्राह्मणाधिकरणकप्रतिपत्तिसम्भवाच्चेत्याहुः ।

शूलपाणिस्तु-सम्बोधनपदोपनीतान् पित्रादींश्चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धमित्याह । अत्र फलभागित्वरूपोद्देश्यतानिवृत्त्यर्थं सम्बोधनपदोपनीताननितिविशेषणम् । पित्रादीनित्यादिपदेन देवादयोऽपि विवक्षिताः । तेन देवश्राद्धादावपि श्राद्धशब्दो मुख्य एवेति

मैथिलास्तु—वेदबोधितपात्रालम्भपूर्वकहविस्त्यागः श्राद्धम् । अत्रालम्भो न श्राद्धविशेषणम् । अन्यथा तस्य वेदबोध्यत्वाभावेन तद्घटितश्राद्धस्य वेदाबोध्यत्वापत्तेः किन्तूपलक्षणम् । उपलक्ष्यश्च स्वतो विलक्षणस्त्यागविशेष एव । एतेन यन्मत एकोद्दिष्टे पात्रालम्भो नास्ति तन्मते तत्र नाव्याप्तिः । नापि सन्न्यासिकर्तृकात्मादिश्राद्धेऽपि सा । "दैविकं दशमं स्मृतम्" इति विभागोऽपि च समञ्जसो भवति ।

कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप! ॥
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥

---

पिण्डदानं त्वङ्गमेव । "श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः । उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत् ॥" इत्यादिवाक्येषु आनन्तर्यार्थकक्त्वाप्रत्ययेनान्नोत्सर्ग एव श्राद्धपदप्रयोगात् "त्रिषु पिण्डः प्रवर्तते" इति चाङ्गमुखेन प्रधाननिर्देशः । पिण्डपितृयज्ञविषयं वा इत्याहुः ।

ननु त्यागो न श्राद्धं किन्तु "पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्" इति ब्रह्मपुराणात् "श्रद्धया दीयते यस्मात्तच्छ्राद्धं परिकीर्तितम्" इति मरीचिवचनात्, "प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः" इतिस्मृत्यन्तरवचनाच्च दानकर्मणो द्रव्यस्यैव श्राद्धत्वावगमात् त्यज्यमानं द्रव्यमेव श्राद्धम् । एवं च "श्राद्धमामं तु कर्तव्यमिति वेदविदां स्थितिः" इति द्रव्यसामानाधिकरण्यमप्युपपद्यते । न चैवमादिषु श्राद्धशब्दस्य लक्षणया द्रव्यपरत्वं प्रमाणाभावात् इति चेत्, न । "श्राद्धं कुर्यात्" इत्यादौ द्रव्यस्य सिद्धत्वेन साक्षाद्भावनान्वयासम्भवात् । क्रियापरत्वेन साक्षादन्वये सम्भवति अनुपस्थित त्यागादिक्रियाद्वारा परम्परान्वयस्यानौचित्यात् । 'सोमेन यजेत' इत्यादौ तु बलवत्या प्रसिद्ध्या द्रव्यपरत्वे सोमपदस्यावधारिते सोमस्य श्रौतधात्वर्थद्वारा भावनान्वयो युक्तो भवति । प्रकृते तु श्राद्धशब्दस्य द्रव्ये प्रसिद्ध्यभावादश्रुतधात्वर्थद्वारकपरम्परान्वयोऽनुचित एव । किञ्च कुशयवतिलगोधूममांसादिद्रव्यं पित्रादिभ्यः श्रद्धया देयमित्यादिना श्राद्धे विधित्सितद्रव्यस्य प्राप्तत्वात् तत्प्रख्यन्यायेनाग्निहोत्रादिपदवत्कर्मनामधेयतैवोचिता । किञ्च नित्यनैमित्तिककाम्यभेदा अग्रे वक्ष्यन्ते ते च प्रायशः कर्मण्येव प्रसिद्धा इत्यतोऽपि कर्मनामता । अत एवापस्तम्बेन "श्राद्धशब्दं कर्म" इत्युक्तम् ।

यत्तु–"प्रमीतस्य पितुः पुत्रैर्देयं श्राद्धं प्रयत्नतः" इति श्राद्धस्य देयत्वमुक्तम्, यच्च–"श्राद्धमामं तु कर्तव्यमिति वेदविदां स्थितिः" इति द्रव्यसामानाधिकरण्यम् तत् श्राद्धशब्दस्य लक्षणामभिप्रेत्य । एवं च कर्मनामत्वे सिद्धे "श्रद्धया दीयते यस्मात्तेन श्राद्धं निगद्यते" इति

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
निसेन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावास्यां यत्क्रियते तत्पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ॥
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय ! मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव कर्माङ्गं श्राद्धमुच्यते ॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते ।

---

बृहस्पतिवाक्यं श्राद्धशब्दस्य योगप्रदर्शनार्थम् । तेनान्यत्र प्रयोगाभावाद्योगवशाच्च योगरूढोऽयं श्राद्धशब्द इति । यद्यपि च "तस्माच्छ्रद्धां समासाद्य धर्मं धर्म्मात्समाचरेत्" इत्यादिविष्णुधर्मोत्तरादिवाक्यैः श्रद्धायाः सर्वकामार्थता तथापि 'श्रद्धान्वितः श्राद्धं कुर्वीत" इति कात्यायनेन विशिष्य श्राद्धे श्रद्धायाः पुनरङ्गत्वोक्तेः श्रद्धाविशेषोऽश्राङ्गमिति बोध्यम् । अत एव नन्दिपुराणे—'श्रद्धा माता तु भूतानां श्रद्धा श्राद्धेषु शस्यते" इति तस्यास्तत्र प्राशस्त्यमुक्तम् । एवं च सकलस्मृत्याद्येकवाक्यतया श्राद्धस्य त्यागरूपत्वे सिद्धे यत्कैश्चिद्ब्राह्मणभोजनस्य श्राद्धपदार्थत्वमुक्तं तद्विचारणीयम् । न च—"पितॄन् पितामहान्यक्ष्ये भोजनेन यथाक्रमम् । प्रपितामहान्सर्वांश्च तत्पितॄंश्चानुपूर्वशः ॥" इति ब्रह्माण्डपुराणे भोजनश्रवणात् तस्यैव श्राद्धत्वमितिवाच्यम् । भोजनपदस्य कर्मण्युत्पत्त्या–'प्रेतान्पितॄनप्युद्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम् ॥" इति मरीचिवाक्यैकवाक्यतया भोज्यपरत्वात् । अन्यथा प्रपितामहपितॄनुद्दिश्य भोजनाभावेन 'तत्पितॄंश्चानुपूर्वश' इत्यस्यासङ्गतिः स्यादिति । अस्मिन्मते तेषां लेपभागित्वेन त्यागोद्देश्यत्वाच्च विरोध इति ।

हविष्येण विशेषेण सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते ॥ इति ।

वृद्धिः=पुत्रजन्मादिः । पर्वणि=सङ्क्रान्त्यादौ । निषेककाले इति श्रौतस्मार्त्तकर्मोपलक्षणम् । देशान्तरगमनं तीर्थयात्रारूपम् । प्रवेशश्च तत्समाप्त्यनन्तरो गृहप्रवेशः । शरीरोपचये=शरीरोपचयहेतुभूतशान्त्यादिप्रयोगे ।

**कात्यायनः**—

मृताहोऽहरहर्दर्शश्राद्धं यच्च महालये ।
तन्नित्यमुदितं सद्भिर्नित्यवच्च विधानतः ॥ इति ।

## अथ श्राद्धकालाः ।

**याज्ञवल्क्यः**—

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥ इति ।

अत्राष्टकाः "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका" इत्याश्वलायनसूत्रोक्ताश्चतस्रः । पञ्चमी भाद्रकृष्णाष्टमी । तथाच—

**पद्मपुराणे,**

प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यमैश्वर्यं सर्वकामफलप्रदा ॥ इति ।

अत्रापि सप्तम्यादिदिनत्रयेऽष्टकावच्छ्राद्धं कार्यम् । "एतेन

माघ्या वर्षं प्रौष्ठपद्या अपरपक्षे" इत्याश्वलायनोक्तेः । वृद्धि-रुक्ता। कृष्णपक्षः सर्वोऽपि । द्रव्यं=श्राद्धयोग्यमन्नादि । ब्राह्मणसम्पत्तिः पङ्क्तिपावनादिसम्पत्तिः । सूर्यसङ्क्रम इत्येतावतैव सिद्धे पुनर्विषुवद्ग्रहणं सूचयति सर्वसङ्क्रान्तिष्वसमर्थोऽत्रैव श्राद्धं कुर्यादिति । अयनविषुवतोर्लक्षणं—

हेमाद्रौ नागरखण्डे,

मकरे कर्कटे चैव यदा भानुर्व्रजेन्नृप! ।
तदायनाभिधानश्च विषुवत्स विशिष्यते ॥
यदा स्यान्मेषगो भानुस्तुलां चाथ यदा व्रजेत् ।
तदा स्याद्विषुवाख्यस्तु कालश्चाक्षयकारकः ॥ इति ।
अमावास्या निर्णीता तिथ्यर्के ।

तथा—

आषाढ्यामथ कार्त्तिक्यां माघ्यां मन्वन्तरादिषु ।
युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते ॥
प्रौष्ठपद्यसिते पक्षे श्राद्धं कुर्वीत यत्नतः ।
प्रत्यब्दं तु प्रयत्नेन श्राद्धं कुर्यान्मृताहनि ॥ इति ।

युगादयोऽप्युक्तास्तिथ्यर्के ।

शातातपः—

नवोदके नवान्ने च नवप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥
तस्माद्दद्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥ इति ।

नवोदके वर्षोपक्रमे इति शूलपाणिः । नवकूपादावित्यपरे। वस्तुतस्तु तीर्थोदके इति युक्तम् । वचनान्तरैकवाक्यत्वात् । नवप्रच्छादने=नवागारसम्पादने ।

आश्वलायनः, अपरेद्युरन्वष्टक्यमिति ।

ब्राह्मे—

मार्गशीर्षे च पौषे च माघे पौष्ठे च फाल्गुने ।

कृष्णपक्षेषु पूर्वेद्युरन्यष्टक्यं तथाष्टका ॥ इति ।

कात्यायनः—

अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।

पित्रादिमातृमध्यं च ततो मातामहान्तिमम् ॥ इति ।

अष्टकान्वष्टकाश्राद्धं नित्यमित्युक्तं हेमाद्रौ--

विष्णुधर्मोत्तरे,

अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम! ।

एतानि श्राद्धकालानि नित्यानाह प्रजापतिः ॥

श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

अत एवान्वष्टकाश्राद्धं स्वतन्त्रं प्रधानं नाष्टकाङ्गम् । पूर्वेद्युः श्राद्धं त्वष्टकाङ्गम् । फलवत्सन्निधावफलं तदङ्गमितिन्यायात् ।(१) तिस्र इति पौषादिमासत्रयाभिप्रायेण । तथाच हेमाद्रौ--

कूर्मपुराणे,

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।

तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥ इति ।

अयं त्रित्वपक्षस्त्वाश्वलायनान्यपरः "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका" इत्याश्वलायनोक्तेः । एतदकरणे प्रायश्चित्तम्—

ऋग्विधाने,

एभिर्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने ।

अन्वष्टक्यं यदा शून्यं सम्पूर्णं याति सर्वथा ॥ इति ।

करणेऽभ्युदय उक्तो--

हेमाद्रौ,

---

(१) यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र 'समिधो यजति' 'तनूनपातं यजति' 'आज्यभागौ यजति' इत्यादिप्रयाजादीनां फलरहितानामपि फलवदाग्नेयसन्निधौ पठितत्वेन दर्शपौर्णमासाङ्गत्वं तद्वदिहापीति बोध्यम् ।

राजा तु लभते राज्यमधनश्चोत्तमं धनम् ।
क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः ॥ इति ।

हारीतः--

तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत् ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥ इति ।

तीर्थे=वेण्यादौ । द्रव्योपपत्तौ=अलभ्यश्राद्धीयद्रव्यप्राप्तौ चामावास्यापराह्णादिरूपः कालो न प्रतीक्षितव्य इत्यर्थः ।

अत एव--

देवीपुराणे,

अकालेऽप्यथवा काले तीर्थश्राद्धं सदा नरैः ।
प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम् ॥
पिण्डदाने तु तच्छस्तं पितॄणां चातिदुर्लभम् ।
विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्(१) ॥ इति ।

गजच्छायोक्ता--

स्कन्दपुराणे,

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता ॥ इति।

पितृदैवत्यं=मघा । हंसो=रविः । करो=हस्तनक्षत्रम् । याम्या तिथिः त्रयोदशी ।

तथा,

हंसे हंसस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

अत्र भोक्तुर्दोषो हेमाद्रौ—

ब्रह्मपुराणे,

(१) अत्र—प्राप्तैरेवेति आवश्यकस्नानतर्पणोपवासानन्तरमित्यर्थः । तावतो विलम्बस्य विध्यनुज्ञावशादप्रतिबन्धकत्वात् । इत्यधिकं पुस्तकान्तरे ।

मृतके सूतके चैव ग्रहणे चन्द्रसूर्ययोः।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत् ॥ इति।

इति श्राद्धकालाः।

अथ श्राद्धदेशाः।

**विष्णुधर्मोत्तरे—**

दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥

दक्षिणाप्रवणे=दक्षिणतो निम्ने। भूसंस्कारो=गोमयेनोपलेपादिः।

**प्रभासखण्डे—**

तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः शुभे!।

**श्रीमहाभारते—**

तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती।
प्रभासं पुष्करं चेति तेषु श्राद्धं महाफलम् ॥ इति।

अथ निषिद्धदेशाः।

**शङ्खः—**

गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥

कृत्रिमायाम्=अट्टालिकायाम्।

**यमः—**

परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥

**स एव—**

रूक्षं कृमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्माणि ॥ इति।

## अथ श्राद्धाधिकारिणः ।

**सुमन्तुः—**

मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः ।
पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादृतः ॥

**हेमाद्रौ शङ्खः,**

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ॥ इति ।

अत्र पुत्रग्रहणं द्वादशविधपुत्रोपलक्षकम् । ते चोक्ता-- **याज्ञवल्क्येन,**

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तत्सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भेविन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।
पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः ॥ इति ।

वस्तुतस्तु इतरेषां कलौ निषेधादौरसदत्तकयोरेव पुत्रपदेनात्र ग्रहणमिति ध्येयम् । तत्रायं विशेषः । पुत्राभावे पौत्रस्य तदभावे प्रपौत्रस्य तदभावे पुनर्दत्तकस्याधिकार इति । तथा च **विष्णुपुराणे,**

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि श्राद्धार्हो नृप! जायते ॥
एषामभावे सर्वेषां समानोदकसन्ततिः । इति ।

याज्ञवल्क्योऽपि--

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । इति ।

अन्यत्रापि—

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ इति ।

औरसपुत्रस्य त्वनुपनीतस्यापि श्राद्धाधिकारमाह--

वृद्धमनुः,

कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।

पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ॥ इति ।

एको मुख्यः औरस इति यावत् ।

पृथ्वीचन्द्रोदये सुमन्तुरपि—

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।

व्रतस्थो वाव्रतस्थो वा एक एव भवेद्यदि ॥ इति ।

अनुपनीतं विवृणोति—

स एव,

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।

यद्यसौ कृतचूड़ः स्याद्यदि च स्यात् त्रिवत्सरः ॥ इति ।

अत्र विशेषणद्वयमपि विवक्षितं विधेयकर्तृगतत्वात्(१) ।

यत्तु—

व्याघ्रपादः,

कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च ।

स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥ इति,

यच्च स्मृतिसङ्ग्रहे—

कृतचूडोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत् ।

उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ इति,

(१) अत्र-एतेनोपनीतपौत्रसत्त्वेऽप्युक्तलक्षणानुपनीतपुत्रसद्भावे स एवाधिकारी भवतीति सिद्धमित्यधिकः पाठः पुस्तकान्तरे ।

तत् प्रथमवर्षकृतचूडविषयमिति माधवमदनरत्नादयो बहवः प्राञ्चः। श्रीमातामहा अप्येवम्। केचित्तु दत्तकादिपरोऽयं निषेध इत्याहुस्तन्न मनोहरम्। दत्तकादीनामुपनीतानामेवाधिकारात्। तथाच—

स्कान्दे,

पित्रोरनुपनीतोऽसौ विदध्यादौरसः सुतः।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः॥ इति।

प्रथमवर्षकृतचूडस्याप्यग्निदानमात्रं समन्त्रकमन्यत्त्वमन्त्रकम्—

असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्।
कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि॥

इति कात्यायनवचनात्। (१)अकृतचूडस्याग्निदानमपि न भवति।

पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात्।
पितरं(२)नाब्दिकाच्चौलात्पैतृमेधेन कर्मणा॥

इति सुमन्तुवचनादित्यलं विस्तृत्या। दत्तकाभावे पत्नी पूर्वोक्तवाक्यात्।

अपुत्रा पुत्रवत्पत्नी पुत्रकार्यं समाचरेत्।

इत्युक्तेश्च(३),

---

(१) अत्र-पत्न्या कारयेदन्यमेव हीत्युक्तिः सामर्थ्याभावे बोध्या। वक्ष्यमाणवचनाविरोधात् इत्यधिकः पाठः पुस्तकान्तरे।

(२) अत्र न आ आब्दिकात् इति च्छेदः कार्यः। एवं च पुत्रो वर्षाधिकवयस्क एव पितृमेधकर्मण्यधिकारी न तु ततः पूर्वम्। एतच्च वचनमौरसविषयकमेवेति कालादर्शकारः।

पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः॥

इति स्कान्दवचनात्। दत्तकादीनां तूपनीतानामेवाधिकारः।

(३) अत्र-अपुत्रे प्रस्थिते कर्ता नास्ति चेच्छ्राद्धकर्मणि।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा॥

भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च ।
श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ॥

इति वाक्याच्च । पत्युरपि सपत्नीपुत्रे सति भार्याश्राद्धे नाधिकारः ।

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

इति बृहस्पतिवचनात् । मदनरत्ने कात्यायनेन तु स्पष्टमेवोक्तम्—

विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा स्मृताः ॥
तेषामभावे तु पतिस्तदभावे सपिण्डकाः ॥ इति ।

पत्न्यभावेऽविभक्तस्य सोदरः पूर्वलिखितशङ्खवचनात् । विभक्तस्य दुहिता धनहारित्वात् । सा तूढैवाधिकारिणी न त्वनूढा ।

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता ।
आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः ॥

इति भारद्वाजोक्तेः । तदभावे दौहित्रः धनहारित्वात् । तथा च मदनरत्ने—

स्मृतिसङ्ग्रहे,

पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ ।
धनहार्यथ दौहित्रस्तद्भ्राता वाथ तत्सुतः ॥ इति ।

स्कान्देऽपि,

श्राद्धं मातामहानां तु अवश्यं धनहारिणा ।
दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं पूर्वमुत्तरम् ॥ इति ।

---

इति माधवीये सुमन्तुवाक्याच्च ।
यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथा नृप ! ।
तथौर्ध्वदेहिकं कर्म कुर्यात्सा धर्मसंस्कृता ॥
इति मदनरत्ने स्कान्दात् इत्यधिकं पुस्तका० ।

एतेन पुत्रीकृत एव दौहित्रोऽधिकारीति (१)केषां चिन्मत-मपास्तम्। अधनहारिणोऽप्यधिकारोऽपरार्के—

भविष्ये,

यथा व्रतस्थोऽपि सुतः पितुः कुर्यात्क्रियां नृप !।
उदकाद्यां महाबाहो ! दौहित्रोऽपि तथार्हति ॥ इति।

ततः पिता। ततो माता—

उत्सन्नबान्धवं प्रेतं पिता भ्राताथवाग्रजः।
जननी वापि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥

इति सुमन्तूक्तेः। इहाथशब्दादेरभावात्क्रमो न विवक्षितः। सन्निधौ दूरे वाधिकारिणि बौधायनः,

पित्रा श्राद्धं न कर्तव्यं पुत्राणां च कथञ्चन।
भ्रात्रा चैव न कर्त्तव्यं भ्रातॄणां च कनीयसाम् ॥
यदि स्नेहेन कुर्यातां सपिण्डीकरणं विना।
गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥ इति।

द्वैतनिर्णये स्मृतिसङ्ग्रहे—

पत्नी भ्राता च तत्पुत्रः पिता माता स्नुषा तथा।
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ॥
असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः। इति।

स्त्रीशूद्रैः श्राद्धममन्त्रकं कार्यम्।

स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च।
प्राग्द्विजाश्च व्रतादेशात्ते च कुर्युस्तथैव तत् ॥

इति हेमाद्रिधृतमारीचात्।

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥

इति ब्राह्मोक्तेश्च। गृह्यते=संयुज्यते। यत्तु "प्राग्द्विजाश्च

(१) देवयाज्ञिकादीनाम्।

व्रतादेशात्" इति तदकृतचूडविषयम् । शूद्रस्य सदामश्राद्धमेव न पक्वान्नश्राद्धम् ।

सदा चैव तु शूद्राणामामश्राद्धं विधीयते(१) ।

इति सुमन्तूक्तेः । पृथ्वीचन्द्रोदये विशेषमाह—

वृद्धपराशरः,

आमान्नेन तु शूद्रस्य तूष्णीं च द्विजपूजनम् ।
कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेदथ ॥

इति दिक् ।

इति श्रीभारद्वाजमहादेवभट्टात्मजदिवाकरभट्टविरचितायां श्राद्धचन्द्रिकायामधिकारिनिर्णयः ।

अथ श्राद्धयोग्या ब्राह्मणाः ।

तत्रादौ ब्राह्मणप्रशंसामाह—

हेमाद्रौ भविष्यपुराणे,

ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम् ।
ब्राह्मणेभ्यः परं नास्ति भूतं किञ्चिज्जगत्त्रये ॥
येषां प्रसादात्सुलभमायुर्धर्मः सुखं धनम् ।
श्रीर्यशः स्वर्गवासश्च तान्विप्रानर्चयेद्बुधः ॥

मनुः —

वेदविद्याव्रतस्नातान् श्रोत्रियान्गृहमेधिनः ।
पूजयेद्धव्यकव्येन विपरीतांस्तु वर्जयेत् ॥

गृहमेधिनो=गृहस्थाः । श्रोत्रियलक्षणम्—

---

(१) अत्र--

न पक्वं भोजयेद्विप्रान् सच्छूद्रोऽपि कदाचन ।
भोजयन् प्रत्यवायी स्यान्न च तस्य फलं भवेत ॥

इत्याधिकं पुस्तकान्तरे ।

ब्रह्मवैवर्त्ते,

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया चापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥ इति ।

स एव,

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥
एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।
पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥ इति ।

कौर्म्मे—

असमानप्रवरको ह्यसगोत्रस्तथैव च ।
असम्बन्धी च विज्ञेयो ब्राह्मणः श्राद्धसिद्धये ॥

गारुड़े—

श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तमाः ।
ये योनिगोत्रमन्त्रान्तेवासिसम्बन्धवर्जिताः ॥

शातातपः—

भोजयेद्यद्यथर्वाणं दैवे पित्र्ये च कर्माणि ।
अनन्तमक्षयं चैव फलं तस्येति वै श्रुतिः ॥

ब्रह्मवैवर्त्ते—

विप्रान्गृहस्थान्वेदार्थविदो निरभिमानिनः ।
पत्नीपुत्रसमायुक्तान् श्राद्धकर्माणि योजयेत् ॥ इति ।

अथ मध्यमाः ।

हेमाद्रौ गार्ग्यः,

नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः ।
अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥
असमप्रवराभावे समानप्रवरानपि ॥

मनुः—

मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यांश्च भोजयेत् ॥

मात्स्ये,

भोजयेच्चापि दौहित्रं यत्नतः श्वशुरं गुरुम् ।
विट्पतिं मातुलं बन्धुमृत्विगाचार्यशालकान् ॥

विट्पतिर्जामातेति हेमाद्रिः । अतिथिरिति मेधातिथिमाधवौ । बन्धुः मातृष्वसृपितृष्वसृमातुलपुत्रः । एवं पित्रोरपि ।

गौतमः—शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्यो गुणवतः ।

देवलः—

अज्ञातीनसमानार्षानयुग्मानात्मशक्तितः ।

भोजयेदिति शेषः ।

अत्रिः—

पिता पितामहो भ्राता पुत्रो वाथ सपिण्डकः ।
न परस्परमर्हाः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्पुत्रादयोऽप्येते सकुल्या ब्राह्मणाः स्मृताः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥ इति ।

अथ निषिद्धाः ।

वायुपुराणे—

न भोजयेदेकगोत्रान्समानप्रवरांस्तथा । इति ।

मनुः—

न मित्रं भोजयेच्छ्राद्धे धनैः कार्योऽस्य सङ्ग्रहः ।
नारिं न मित्रं यं विद्यात्तं तु श्राद्धे निमन्त्रयेत् ॥

जातूकर्ण्यः—

पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ।
सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ॥

मरीचिः—

अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च ।
वर्जनीयाः प्रयत्नेन ब्राह्मणाः श्राद्धकर्मणि ॥

लम्बकर्णलक्षणमाह—

गोभिलः,

हनुमूलादधः कर्णौ लम्बौ तु परिकीर्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्ताविति शातातपोऽब्रवीत् ॥

ब्राह्मे—

भोक्तुं श्राद्धे च नार्हन्ति दैवोपहतचेतसः ।
षण्ढो मूकश्च कुनखी खल्वाटो दन्तरोगवान् ॥
श्यावदन्तः पूतिनासश्छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गलरोगी च गडुमान् स्फुटिताङ्गश्च सज्वरः ॥
खञ्जनूपुरमण्ठाश्च (१)ये चान्ये दीनरूपिणः ।

खल्वाटः=केशरहितः । पूतिनासोऽक्षिरोगी । गडुमान् कुब्जः । खञ्जः=कुण्ठः । नूपुरो=यौवने श्मश्रुराहितः । स्कान्दे· काणाः कुण्ठा इत्युपक्रम्य—

एतान्विवर्जयेत्प्राज्ञः श्राद्धेषु श्रोत्रियानपि । इति(२) ।

नन्दिपुराणे—

ब्रह्मज्ञानोपदेशेन ये कुर्वन्त्यशुभं महत् ।
सर्वकर्मसु वर्ज्यास्ते चाण्डाला द्विजरूपिणः ॥

कालिकापुराणे—

अनाश्रमी तु यो विप्रो जटी मुण्डी वृथा च यः ।
वृथाकाषायधारी यः श्राद्धे तं दूरतस्त्यजेत् ॥

सौरपुराणे,

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान्गुर्जरांस्तथा ।
आभीरान् कोङ्कणांश्चैव द्राविडान्दाक्षिणायनान् ॥

---

(१) मण्ठाः=वक्रजङ्घाः ।

(२) एतान् विवर्जयेद्विप्रान् प्राज्ञः श्राद्धेष्वश्रोत्रियान् । इति पाठः श्राद्धमयूखे ।

आवन्त्यान्मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ।

क्वचित्प्रतिप्रसवमाह मनुः,



न ब्राह्मणान् परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥

पद्मपुराणे,

तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात् ॥

विष्णुधर्मोत्तरे--

अन्नदाने न कर्त्तव्यं पात्रावेक्षणमण्वपि ।
अन्नं सर्वत्र दातव्यं धर्मकामेन वै द्विज ! ॥

परीक्षाप्रकारो मनुस्मृतौ,

शीलं संवत्सराज्ज्ञेयं शौचं सद्व्यवहारतः ।
प्रज्ञा सङ्कथनाज्ज्ञेया त्रिभिर्विप्रं परीक्षयेत् ॥ इति दिक् ॥

## अथ श्राद्धे ग्राह्यपदार्थाः ।

यमः—

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति शक्रस्य सुमहात्मनः ॥ इति ।

ब्रह्मपुराणे--

हरिताश्च सपिञ्जूला स्निग्धाः पुष्टाः समाहिताः ।
गोकर्णमात्रास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥

सपिञ्जूलाः अपृथक्कृतदलाः। समाहिताः=निर्दोषाः । गोकर्णमात्रा=अङ्गुष्ठानामिकाविस्तारदीर्घाः । दर्भसङ्ग्रहकालस्तु प्रदर्शितः तिथ्यर्के ।

हेमाद्रौ पाद्मे--

अन्नं च सदधिक्षीरं गोघृतं शर्करान्वितम् ।
मासं प्रीणाति वै सर्वान्पितॄनित्यब्रवीदजः ॥

सुमन्तुरपि--

पयो दधि घृतं चैव गवां श्राद्धेषु पावनम् ।
महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित् ॥

देवीपुराणे--

सर्वेषामेव चान्नानां परमान्नं च पायसम् ।
सर्वान्नदः स तु प्रोक्तो येन दत्तं तु पायसम् ॥

सौरपुराणे--

विविधं पायसं दद्याद्भक्ष्याणि विविधानि च । इति ।

प्रचेताः--

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ।
(१)महायवा व्रीहियवास्तथैव च मधूलिकाः ॥
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि ।

"मधूलिका यावनाला" इति हेमाद्रिः ।

अत्रिः--

तैलपक्वान्नरहितं मुद्गमाषविवर्जितम् ।
अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत् ॥

ब्राह्मे--

यवैर्व्रीहितिलैर्माषैर्गोधूमश्चणकैस्तथा ।
सन्तर्पयेत्पितॄन्मुद्गैः श्यामाकैः सर्षपद्रवैः ॥
नीवारैर्हरिश्यामाकैः प्रियङ्गुभिरथार्चयेत् ।

प्रियङ्गुः=कङ्गुः । सर्षपा=गौरसर्षपाः ।

मार्कण्डेयः-

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥

सतीनैः=कलायैः ।

---

(१)महायवाः=वेणुबीजानि ।

वायुपुराणे--

भक्ष्यान्वक्ष्ये करम्भं च वटका घृतपूरिकाः।
कृसरं मधु सर्पिश्च पयः पायसमेव च॥
स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेत्।

मदनरत्ने कौर्मे--

कालशाकं च वास्तूकं मूलकं कृष्णनालिका।

प्रशस्तानीतिशेषः।

आदित्यपुराणे-

मधुकं रामठं चैव कर्पूरं मरिचं गुडम्।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा॥

रामठं=हिङ्गुः। त्रपुसमम्लदधि।

वायुपुराणे—

(१)कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम्।
बिल्वामलकमृद्वीकापनसाम्रातदाडिमम्॥
चव्यं पालिवताक्षोटखर्जूरं च कसेरुकम्।
कोविदारश्च कन्दश्च पटोलं बृहतीफलम्॥
पिप्पली मरिचं चैव एला शुण्ठी च सैन्धवम्।
शर्करागुडकर्पूरबदरीद्रोणपत्रकम्॥ इति।

कार्ष्णाजिनिः,

यदिष्टं जीवतश्चासीत्तद्दद्यात्तस्य यत्नतः।
सुतृप्तो दुस्तरं मार्गं ततो याति न संशयः॥

अथ वर्ज्यपदार्थाः।

वायुपुराणे—

अकृताग्रयणं धान्यजातं वै परिपाटलाः(२)।

---

(१) कालशाकं=कालिका। आम्रातः=अंबाडा इति प्रसिद्धो वृक्षविशेषः तत्फलम्। चव्यं=चाभ इति प्रसिद्धम्। पालिवतं=जम्बीरम्। अक्षोटः=अखरोट इति प्रसिद्धः। कन्दः=सूरणः।

(२) परिपाटलाः स्थूला राजमाषाः।

राजमाषानणूंश्चैव मसूरांस्तु विवर्जयेत् ॥

अणुर्व्रीहिभेदः "व्रीहिभेदस्त्वणुः पुमान्" इतिकोशात् ।

भारद्वाजः,—

मुद्गाढकीमाषवर्जं द्विदलानि दद्यादिति ।

मुद्गा=वनमुद्गाः । आढकी=तुवरी । माषा=राजमाषाः

षट्त्रिंशन्मते—

यावनालान्कुलत्थांश्च वर्जयन्ति विपश्चितः ।

यावनालः=जोंधला इति हेमाद्रिः ।

भारद्वाजः—

नक्तोद्धृतं तु यत्तोयं पल्वलाम्बु तथैव च

स्वल्पं च कूष्माण्डफलं वज्रकन्दश्च पिप्पली ॥

ब्रह्मपुराणे—

हिङ्गूग्रगन्धापनसं भूनिम्बं निम्बराजिके ।

(१)कुस्तुम्बुरुं कलिङ्गोत्थं वर्जयेदम्लवेतसम् ॥

राजिका भाषायां राई इत्युच्यते । अत्र हिङ्गुनो विहितप्रतिषिद्धत्वाद्विकल्पः । प्राञ्चस्तु निषेधवचनं श्वेतहिङ्गुनिषेधकमित्याहुः ।

चतुर्विंशतिमते—

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।

न वर्जयेत्तिलांश्चैव मुद्गमाषांस्तथैव च ॥

मार्कण्डेयपुराणे—

लशुनं गृञ्जनं चैव पलाण्डुं पिण्डमूलकम्(२) ।

करम्भं यानि चान्यानि हीनानि रसवर्णतः ॥

(३)गान्धारिकामलाबूनि लवणान्यौषराणि च ।

(१) कस्तुम्बुरुः=धान्याकः धनिआ इति प्रसिद्धः ।
(२) पिण्डमूलकं=पिण्डाकृति मूलकम् ।
(३) गान्धारिका=तन्दुलीयकम् ।

वर्जयेत्तानि वै श्राद्धे यच्च वाचा न शस्यते ॥

**वायुपुराणे,**

अवेदोक्ताश्च निर्यासा लवणान्यौखराणि च ।
श्राद्धकर्मण्यदेयानि याश्च नार्यो रजस्वलाः ॥
रजस्वलाः=त्रिदिनोत्तरमनिवृत्तरजसः ।
साध्वाचारा न तावत्स्यात्स्नातापि स्त्री रजस्वला ।
यावत्प्रवर्त्तमानं हि रजो नैव निवर्तते ॥

इति शङ्खस्मृतेः ।

**मनुः—**

कुक्कुटो विड्वराहश्च काकश्चापि विडालकः ।
वृषलीपतिश्च वृषलः षण्ढो नारी रजस्वला ॥
एतानि श्राद्धकाले तु परिवर्ज्यानि नित्यशः ।
कुक्कुटः पक्षपातेन हन्ति श्राद्धमसंवृतम् ।
घ्राणेन विड्वराहश्च वायसश्च रुतेन तु ।
श्वा तु दृष्टिनिपातेन मार्जारः श्रवणेन तु ॥
वृषलीपतिश्च दानेन चक्षुर्भ्यां वृषलस्तथा ।
छायया हन्ति वै षण्ढः स्पर्शेन तु रजस्वला ॥ इति ।

**कूर्मपुराणे—**

(१)आढकीकोविदारांश्च पालङ्क्यां मरिचं तथा।
वर्जयेत्सर्वयत्नेन श्राद्धकाले द्विजोत्तमः ॥

कोविदारःकञ्चनारः। मरिचान्यार्द्राणि स्वतन्त्रशाकतया प्राप्तानि निषिध्यन्ते न तु संस्कारकद्रव्यत्वेनेति हेमाद्रिः ।

**अथ पितृपूजाद्रव्याणि ।**

---

(१) आढकी=तुवरी अरहर इति मध्यदेशभाषायाम्। पालङ्क्या=मुकुन्दाख्यो गन्धद्रव्यविशेष इति मयूखकाराः, पालक इति प्रसिद्धः शाकविशेष इति सिन्धुकाराः।

हेमाद्रौ भगवतीपुराणे(१)—

यश्चन्दनेन शुद्धेन सुश्लक्ष्णेन सुगन्धिना ।
अपि लिम्पति वै विप्रान्स कदाचिन्न तप्यते ॥
तेनैवागुरुमिश्रेण परं सौभाग्यमश्नुते ।
अरोगश्च विलेपेन भुङ्क्ते भोगाननुत्तमान् ॥
यो यक्षकर्दमं दत्ते श्राद्धेषु श्रद्धयान्वितः ।
स भूपतित्वमासाद्य महेन्द्र इव मोदते ॥

यक्षकर्दमलक्षणं—

विष्णुधर्मोत्तरे,

कर्पूरागरुकङ्कोलदर्पकुङ्कुमचन्दनैः ।
यक्षकर्दम इत्युक्तो गन्धः स्वर्गेऽपि दुर्लभः ॥ इति ।

कङ्कोलो मरिचकङ्कोलापरनामकं सुगन्धद्रव्यम् । दर्पः कस्तूरिका ।

मार्कण्डेयः—

चन्दनागरुकर्पूरकुङ्कुमानि प्रदापयेत् ।
अश्वमेधमवाप्नोति पितृणामनुलेपने ॥

पाद्मे—

पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः ।
न देयाः पितृकार्येषु पयश्चैवाविकं तथा ॥ इति ।

पारिभद्रो मन्दारः ।

सायणीये—

तुलसी शतपत्रं च भृङ्गराजं तथैव च ।
परुकं मल्लिका चैव पितृणामक्षयं भवेत् ॥ इति ।

स्मृतिसारे—

अगस्त्यं भृङ्गराजं च तुलसी शतपत्रिका ।
चम्पकं तिलपुष्पं च षडेते पितृवल्लभाः ॥

(१) देवीपुराणे इति द्वि० पु० पाठः ।

शङ्खः—

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि तु ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
जलोद्भवानि देयानि रक्तान्यपि विशेषतः । इति ।

चैत्यवृक्षः=श्मशानवृक्षः ।

अथ धूपदीपौ ।

विष्णुधर्मोत्तरे—

धूपो गुग्गुलजो देयस्तथा चन्दनसारजः ।
अगुरुश्चैव कर्पूरस्तुरुष्कस्त्वक् तथैव च ॥

शातातपः—

हस्तवाताहतं धूपं ये पिबन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तं परिवर्जयेत् ॥ इति ।

शङ्खः—

घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । इति ।

अथ भोजनपात्राणि ।

वायुपुराणे—

पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
राजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ॥
दत्त्वा स लभते दाता प्राकाम्यं धनमेव च । इति ।

हेमाभावे हारीतः, राजतकांस्यपर्णताम्रपात्राणि कार्याणि । इति ।
यदा पर्णपात्रं भोजने तदा पालाशमेवेत्याह—

अत्रिः,

न मृन्मयानि कुर्वीत भोजने दैवपित्र्ययोः ।
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने ॥
बोपदेवस्तु स्मृतिसङ्ग्रहमुदाजहार ।
श्राद्धे पालाशपात्राणि मधुकोदुम्बराणि च ॥

पारिकाकुटकप्लक्षक्रकचानि क्रमाज्जगुः ।
कदलीचूतपनसजम्बूपुन्नागचम्पकाः ।
अलाभे मुख्यपात्राणां ग्राह्याः स्युः पितृकर्मणि ॥ इति ।

तत्र कदलीपत्रं तु न ग्राह्यम् । "न जातीकुसुमानि दद्या-न्न कदलीपत्रम्" इत्यङ्गिरोवचनात्,

असुराणां कुले जाता रम्भा पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ॥

इति क्रतुवाक्याच्च ।

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति निगमवाक्येन कलियुगे मांसमधुनोः श्राद्धे निषेधात्तद्विचारो न प्रदर्शित इति सङ्क्षेपः ।

ग्रन्थविस्तरभिया बहु नोक्तं सारतस्तु निखिलः प्रदर्शितः ।
प्रायशो नहि रुचिर्विपश्चितां विस्तरे भवति सारभागिनाम् ॥

## अथ विश्वेदेवव्यवस्था ।

हेमाद्रावादित्यपुराणे,

विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषु कीर्त्तितौ ।
नित्ये नान्दीमुखे श्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलम्भने देवौ कामकालौ सदैव हि ।
अपि कन्यागते सूर्ये काम्ये च धूरिलोचनौ ॥
पुरूरवार्द्रवौ चैव विश्वेदेवौ च पार्वणे । इति ।

इष्टिश्राद्धमाधानसोमयागादौ क्रियमाणं वृद्धिश्राद्धम् । नान्दीमुखं गर्भाधानादौ क्रियमाणं वृद्धिश्राद्धम् । कन्यागते सूर्ये कन्यासङ्क्रान्त्यन्तर्गतमहालये क्रियमाणम् । काम्यं पुत्रादिफलो-द्देशेन क्रियमाणम् । पार्वणमत्रावश्यकबुद्ध्या क्रियमाणं दर्शादि-श्राद्धम् । सर्वास्विष्टिषु सर्वेषु कर्माङ्ग-श्राद्धेष्विति हेमाद्रिः ।

शङ्खः—

इष्टिश्राद्धे क्रतुर्दक्षावष्टम्यां कामकालकौ । इति ।

अष्टम्यामष्टकाश्राद्धे । कचिद्विश्वेदेवापवादमाह—

शातातपः,

नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातृश्राद्धं च युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ॥
योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः । इति ।

हेमाद्रिर्नान्दीश्राद्धे भिन्नप्रयोगपक्षे मातृश्राद्धमदैवमित्याह । आभ्युदयिकश्राद्धं केषां चिन्मते दैवहीनमित्याह मार्कण्डेयः । आभ्युदयिकं प्रकृत्य—

वैश्वदेवविहीनं तु के चिदिच्छन्ति मानवाः ।
युग्माश्चात्र द्विजाः कार्यास्ते पूज्याश्च प्रदक्षिणम् ॥ इति ।

अथ सङ्क्षेपेणोपयुक्ता श्राद्धपरिभाषा ।

हेमाद्रौ शातातपः,

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥

अत्रिः—

उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥

मार्कण्डेयः—

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ॥

अङ्गुलिनियमः स्मृत्यन्तरे,

अनामिकाभ्यामेवैते पवित्रे ग्रन्थिसंयुते ।
धारयेद्दक्षिणेनैव पाणिना वा कुशग्रहः ॥

पवित्रदर्भसङ्ख्या मार्कण्डेयपुराणे—

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।

एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं नवम् । इति ।

अथ ब्राह्मणनिमन्त्रणम् ।

हेमाद्रौ प्रचेतसः स्मृतौ,

कृतापसव्यः पूर्वेद्युः पितृपूर्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्यं श्वः सम्पाद्यं नः प्रसीदत ॥
सव्येन वैश्वदेवार्थान्प्रणिपत्य निमन्त्रयेत् ।

निमन्त्रणप्रकारो नागरखण्डे—

ब्राह्मणनां गृहं गत्वा तान् प्रार्थ्य विनयान्वितः ।
अमुकस्य त्वया श्राद्धे क्षणो वै क्रियतामिति ॥
वदेदभ्युपगच्छेयुर्विप्राश्चैवों तथेति च ।
भूयोऽपि व्याहरेत्कर्त्ता तं प्राप्नोतु भवानिति ॥
द्विजस्तु प्राप्नवानीति त्रिधिरेष निमन्त्रणे ।

श्राद्धदिनेऽपि निमन्त्रणं कार्यमित्याह—

मनुः,

पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।
निमन्त्रयीत त्र्यवरान्सम्यग्विप्रान्यथोदितान् ॥

निमन्त्रणकर्तारो बृहस्पतिस्मृतौ,

उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान् ।
अपसव्येन पित्र्येऽथ स्वयं शिष्योऽथवा सुतः ॥ इति ।

निमन्त्रयेदिति शेषः । ब्राह्मणसङ्ख्यामाह—

वसिष्ठः,

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥

विस्तरेऽधिकब्राह्मणनिमन्त्रणक्रियादिरूपे न प्रसज्येत न प्रवर्त्तेत । विस्तरे दोषमाह —

मनुः,

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥

सत्क्रिया अन्नसंस्कारविशेषरूपा । देशो दक्षिणप्रवणादिः । कालः कुतुपापराह्णादिः । शौचं यजमानाद्विजगतं शास्त्रोक्तम् । ब्राह्मणसम्पत् श्रोत्रियस्य पङ्क्तिपावनादेर्वा लाभः । तथा चायमर्थः । ब्राह्मणबाहुल्यं पञ्चैतान्नाशयति तस्माद्ब्राह्मणबहुल्यं न कार्यम् । यस्तु ब्राह्मणबाहुल्ये सत्क्रियादिसम्पादने समर्थः स तु हेमाद्र्यादिमहानिबन्धेषूक्तमेकैकस्य स्थाने पित्र्ये नव सप्त पञ्च त्रींस्त्रीन्वा, दैविके दशाष्टषट्चत्वारो वेत्येवंरूपं बाहुल्यमपि कुर्यात् । अत्र वचनानि हेमाद्र्यादिषु द्रष्टव्यानि ।

वृद्धवसिष्ठः—

श्राद्धद्वयं करिष्यंस्तु दश वा चतुरोऽपि वा ।
त्रींन्वा निमन्त्रयेद्विप्रानेकं वा ब्रह्मवादिनम् ॥ इति ।

योगीश्वरः—

द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ इति ।

पितृमातामहयोः श्राद्धे वैश्वदेविकं कर्म तन्त्रेण वा कार्यमिति तुर्यपादार्थः । अत्यसमर्थं प्रति प्रकारान्तरमाह—

देवलः,

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान् दापयेत्तस्मै षड्भ्यो दद्यात्तथासनम् ॥ इति(१)
षट्पिण्डमित्यादि दर्शश्राद्धाभिप्रायेण ।

वसिष्ठोऽपि—

अपिवा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलवृत्तसम्पन्नं सर्वालक्षणवर्जितम् ॥

(१) तथा हविरिति पाठो निर्णयसिन्धौ ।

अस्मिन् पक्षे वैश्वदेविके प्रकारमाह—
स एव,

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ॥

अस्यार्थः । सर्वस्मात्कृतादन्नात्किंचित्पात्रान्तरे गृहीत्वा विश्वेदेवोद्देशेन पात्रालम्भनपूर्वकं सङ्कल्प्य पश्चान्निमन्त्रितविप्रस्य परिवेषितमन्नं पित्रुद्देशेन त्यजेत्पश्चाद्देवनिवेदितमन्नं ब्रह्मचारिणे दद्यात्तदलाभेऽग्नौ दहेदिति ।

शङ्खोऽप्याह—

भोजयेदथ वाप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥ इति ।

पङ्क्तिपावनलक्षणमुक्तम्—
मनुना,

अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पाङ्क्तिपावनान् ॥ इति । (१)

विप्रस्य गृहीतश्राद्धनिमन्त्रणत्यागे दोषमाह—
मनुः,

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामेत्पापः सूकरतां व्रजेत् ॥ इति ।

केतितशब्दः श्राद्धीयनिमन्त्रणनिमन्त्रितवाचकः ।

कथञ्चिदिति मिष्टान्नबहुदक्षिणालोभादिना न तु भो·

---

(१) अत्र हारीतः-दैवे वा यदि वा पित्र्ये निमन्त्र्य ब्राह्मणं यदि ।
तर्पयेन्न यथान्यायं स तु तस्य फलं हरेत् ॥
प्रमादादिज्ञाने प्रयत्नतस्तर्पयित्वा विशेषेण तत्फलं प्राप्नुयात् ।
इत्यधिकं पुस्तकान्तरे ।

जानासामर्थ्येनेत्यर्थः । विप्राभावे दर्भवटौ श्राद्धं कार्यम् ।

निधाय वा दर्भवटूनासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥

इति देवलोक्तेः । तादृशोदाहरणे सङ्कल्पितान्नप्रतिपत्तिमाह—स एव,

पात्राभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ॥ इति ।

अथ श्राद्धदिनपूर्वाह्णकृत्यमाह—

देवलः,

तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रैरन्वारम्भं च बान्धवैः ॥

पाकमिति शेषः पूरणीयः । अशक्तः स्वयं पाकारम्भमात्रं कृत्वान्वारम्भं बान्धवैः स्वमातापितृवंश्यैः कारयेदिति तुर्यपादार्थः । क्वचित्पुस्तके अनारम्भं च बान्धवैरित्येव प्राक्तः पाठः ।

आश्वलायनोऽपि—

समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः ।
कृतोपकारिभिश्चैव पितृपाकः प्रशस्यते ॥ इति ।

पत्न्याः पाककर्तृत्वे लिङ्गं—

हेमाद्रौ प्रभासखण्डे,

अथैतानि पपाचाशु सीता जनकनन्दिनी । इति ।

व्यासोऽपि—

गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः । इति ।

तत्र वर्ज्या ब्राह्मे,

रजस्वलां च पाखण्डां पुंश्चलीं पतितां तथा ।
त्यजेच्छूद्रां तथा वन्ध्यां विधवां चान्यगोत्रजाम् ॥
व्यङ्गकर्णां चतुर्थाहःस्नातामपि रजस्वलाम् ।
वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ॥ इति ।

पाकपात्राणि हेमाद्रावादित्यपुराणे—

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा द्विजः ॥
अच्छिद्रेष्वविलिप्तेषु तथानुपहतेषु च ।
नायसेषु नभिन्नेषु दूषितेष्वपि कर्हिचित् ।
पूर्वं कृतोपयोगेषु मृन्मयेषु न तु क्वचित् ॥ इति ।

मार्कण्डेयः,

अन्हः षट्सु मुहूर्त्तेषु गतेषु त्वथ तान्द्विजान् ।
प्रत्येकं प्रेषयेत्प्रेष्यान्स्नानायामलकोदकम् ॥

प्रेषयेदिति पूर्वेणान्वयः ।

(१)वाराहपुराणे –

प्रभातायां च शर्वर्यामुदिते च दिवाकरे ।
दिवाकीर्तिनमानीय विप्राय विधिपूर्वशः ॥
श्मश्रुकर्म च कर्त्तव्यं नखच्छेदस्तथैव च ।
स्नापनाभ्यञ्जनं दद्यात्पितृभक्तस्तु सुन्दरि ! ॥ इति ।

दिवाकीर्तिर्नापितः ।

प्रभासखण्डे—

ततोऽपराह्णसमयं प्राप्य कर्त्ता समाहितः ।
स्वयं समाह्वयेद्विप्रान् सवर्णैर्वा समाप्लुतान् ॥

मार्कण्डेयः—

स्नातः स्नातान्समाहूतान्स्वागतेनार्चयेत्पृथक् । इति ।

सौरपुराणे—

उपवेश्य ततो विप्रान्दत्त्वा चैव कुशासनम् ।
पश्चाच्छ्राद्धस्य रक्षार्थं तिलांश्च विकिरेत्ततः ॥

ऋश्यशृङ्गः—

दक्षिणं पातयेज्जानु देवान्परिचरन्सदा ।

---

(१) अत्र-वायुपुराणे इति ह्रि० पु० पा०

पातयेदितरं जानु पितॄन्परिचरन्सदा ॥

बौधायनः—

प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।

देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ॥

शङ्खः—

आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः ।

पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि ॥

अक्षय्यासनपाद्येषु गोत्रं नाम प्रकाशयेत् ।

तथा—

क्षणे च पिण्डदाने च गन्धधूपाक्षये तथा ।

सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ॥

अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम प्रकाशयेत् ।

मात्स्ये—

सम्बन्धं प्रथमं ब्रूयान्नामगोत्रे तथैव च ।

पश्चाद्रूपं विजानीयात्क्रम एष सनातनः ॥

स्मृत्यर्थसारे—

गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।

कारिकायाम्—

नामानि चेन्न जानीयात्ततेत्यादि वदेत्क्रमात् ।

नामोच्चारणे विशेषमाह—

बौधायनः,

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।

गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥

गोभिलः—दान्तं नाम स्त्रीणामिति ।

अविभक्तिकं श्राद्धं व्यर्थमित्याह—

नारायणः,

विभक्तिभिस्तु यत्किञ्चिद्दीयते पितृदैवते ।

तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम् ॥

तासां नियम उक्तो—

नारदीये,

अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।
अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः ॥

प्रभासखण्डे—

यज्ञोपवीतिना कार्यं दैवं कर्म प्रदक्षिणम् ।
प्राचीनावीतिना कार्यं पितृकर्माप्रदक्षिणम् ॥

अनुपनीतस्त्रीशूद्राणामुपवीतस्थाने तूत्तरीयम् ।(१)

स्मृत्यन्तरे—

श्राद्धारम्भे तु ये दर्भाः पादशौचे विसर्जयेत् ।
अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विसर्जयेत् ॥
मार्जनादौ तु ये दर्भाः पिण्डोत्थाने विसर्जयेत् ।
उत्थानादौ तु ये दर्भा दक्षिणान्ते विसर्जयेत् ॥
प्रार्थनादौ तु ये दर्भा नमस्कारे विसर्जयेत् ।
श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः ।
विकिरे पिण्डदाने च षट्स्वाचमनमिष्यते ॥

आद्यन्तयोस्तु द्विराचामेत् ।

आद्यन्तयोर्द्विराचामेच्छेषाणि तु सकृत्सकृत् ।

इति हेमाद्रौ सङ्ग्रहोक्तेः ।

जमदग्निः—

सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं च दक्षिणाम् ।
आह्वानं स्वागतं चार्घ्यं विना च परिवेषणम् ॥
विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा ।
विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना ॥
पितॄनुद्दिश्य कर्त्तव्यं प्राचीनावीतिना सदा ।

(१) अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः । इति ब्राह्म-वचनात् ।

विष्णुः—

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

नारदीये सङ्ग्रहे,

तिथिवारादिकं ज्ञात्वा सङ्कल्प्य च यथाविधि ।
प्राचीनावीतिना कार्यं सर्वं सङ्कल्पनादिकम् ॥

तत्रैव—

प्रायश्चित्तविशुद्धात्मा तेभ्योऽनुज्ञां प्रगृह्य च ।
दद्याद्वै ब्रह्मदण्डार्थं हिरण्यं कुशमेव च ॥

हेमाद्रौ शम्भुः,

सम्मार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डलम् ।
उदक्प्लवमुदीच्ये स्याद्दाक्षिणे दक्षिणाप्लवम् ॥

द्वारि द्वारसमीपे गृहाङ्गण इति यावत् । तदुक्तम्—

सङ्ग्रहे,

प्राङ्गणे मण्डलं कुर्याद्दैवे पित्र्ये च कर्मणि । इति ।

मात्स्येऽपि—

एवमासाद्य तत्सर्वं भवनस्याग्रतो भुवि ।
गोमयेनोपलिप्तायां गोमूत्रेण च मण्डले ॥

कार्ये इति शेषः । तत्परिमाणमाकारश्च—

सङ्ग्रहे,

प्रादेशमात्रं देवानां चतुरस्रं तु मण्डलम् ।
त्यक्त्वा षडङ्गुलं तस्माद्दक्षिणे वर्त्तुलं तथा ॥

तथा प्रादेशमात्रम् । लौगाक्षिणाधिकमप्युक्तं परिमाणम् ।

हस्तद्वयमितं कार्यं वैश्वदेविकमण्डलम् ।
तद्दक्षिणे चतुर्हस्तं पितॄणामङ्घ्रिशोधने ॥ इति ।

हेमाद्रौ भृगुः—

अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः ।
आर्ताया नवसूताया न गोर्गोमयमाहरेत् ॥

मण्डलार्थमित्यर्थः । एवंविधं मण्डलं सम्पूज्य तत्र विप्रपाद-प्रक्षालनं विदध्यादिति प्रोक्तं—

मात्स्ये,

अक्षताभिः सपुष्पाभिः तदभ्यर्च्यापसव्यवत् ।
विप्राणां क्षालयेत्पादावभिवन्द्य पुनः पुनः ॥ इति ।

वृद्धवसिष्ठः—

न कुशग्रन्थिहस्तस्तु पाद्यं दद्याद्विचक्षणः ।

गोविन्दार्णवे व्यासः,

ग्रन्थिर्यस्य पवित्रस्य विप्रपादाभिषेचने ।
यथा वज्रहतो वृक्षो देवताः पितरस्तथा ॥ इति ।

घृतादिनाभ्यक्तपादयोः पाद्यं देयम् । तथाच—

श्रीरामायणे,

पादशौचमनभ्यङ्गं तिलहीनं च तर्पणम् ।
तत्सर्वं त्रिजटे! तुभ्यं यच्च श्राद्धमदक्षिणम् ॥ इति ।

एतच्चासीनानां कार्यम् ।

पादप्रक्षालनं कार्यमुपवेश्यासने द्विजान् ।
तिष्ठतां क्षालनं कुर्यान्निराशाः पितरो गताः ॥

इति सङ्ग्रहात् ।

स्वयमप्यासीनेन कार्यम् ।

तिष्ठन्प्रक्षालयेत्पादौ दैवे पित्र्ये च कर्माणि ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

इति गौतमोक्तेरनिष्टश्रवणात् । एतच्च प्रसङ्मुख एव कुर्यादित्याह—

वसिष्ठः,

दिवा वा यदि वा रात्रौ न कुर्यात्प्राङ्मुखः शुचिः ।
प्रत्यङ्मुखस्तु कुर्वीत विप्रपादाभिषेचनम् ॥ इति ।

रात्राविति तीर्थश्राद्धाभिप्रायेण ।

ब्रह्माण्डे,

ततस्तु मण्डले शुद्धे द्विजाः प्रक्षालिताङ्घ्रयः ।
कुर्युराचमनं सर्वे मण्डलोत्तरतः स्थिताः ॥
श्राद्धकर्त्ताथ भूयोऽथ समाचम्य यथाविधि । इति ।

तदनुविधेयमाह —

क्रतुः,

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यगाचान्तान्प्रणतान्शुचीन् ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ॥ इति ।

विविक्तेषु परस्परमसंलग्नेषु । उपवेशनमन्त्रमाह—

धर्मः,

जान्वालभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् ॥

यमः—

आसनं संस्पृशन्सव्येन पाणिना दक्षिणेन ब्राह्मणमुपसंस्पृश्य समाध्वमिति चोक्त्वोपवेशयेत् ।

पैठीनसिः, प्राङ्मुखान्विश्वान्देवानुपवेशयेदासनेषु पितॄन्दक्षिणपूर्वेणेति ।

पितॄन्दक्षिणस्यां प्राक्संस्थानुपवेशयेदित्यर्थः ।

ब्रह्माण्डे,

रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतोदिशम् ।
तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्यापहता । इति ॥

ब्राह्मे,

हविषां संस्कृतानां तु पूर्वमेवापवर्जनम् ।
मृत्संपृक्ताभिरद्भिश्च प्रोक्षणं तु विधीयते ॥ इति ।

अस्यार्थः । संस्कृतानां निष्पन्नानां हविषां पितृपाकानां पूर्वमादौ अपवर्जनं पतितनग्नाचाररहितादिदुष्टदृष्टिनिपा-

तराहित्यं विधेयम् । यदीत्थं कर्तुमशक्यं तदा मृत्संपृक्ताभिरद्भिः श्राद्धपाकाः प्रोक्षणीया इति । तत आसनदानादीनि धूपदीपाच्छादनदानान्तानि पदार्थानुसमयपक्षेण काण्डानुसमयपक्षेण वा कर्त्तव्यानि । पदार्थानुसमयो नामासनावाहनार्घ्यगन्धपुष्पादिदानानां दैवे पित्र्ये च पूर्वं पूर्वं पदार्थं परिसमाप्यानुष्ठानम् । काण्डानुसमयस्तु एतान्सर्वान्पदार्थान्दैवे कृत्वा पश्चात्पित्र्येऽनुष्ठानम् ।

**आश्वलायनः**—अपः प्रदाय दर्भान्द्विगुणभुग्नानासनं प्रदायापः प्रदायेति ।

आसनं प्रदायेति सप्तम्यर्थे द्वितीया । उपवेशनस्य प्राक् चोदितत्वादिति वृत्तिकृत् । इदं दर्भदानं देवानां दक्षिणे पितॄणां वामभागे कार्यम् । तदुक्तम्—

**नागरखण्डे,**

ऋजुभिः साक्षतैर्दर्भैः सोदकैर्दक्षिणादिशि ।
देवानामासनं दद्यात्पितॄणां त्वनुपूर्वशः ॥
विषमैर्द्विगुणैर्दर्भैः सतिलैर्वामपार्श्वगैः । इति ।
अत्र द्विजैः स्वासनमिति प्रतिवचनं प्रयोक्तव्यम् ।
गन्धमाल्यासनादीनां प्रदानेषु द्विजोत्तमः ॥
सुगन्धोऽस्तु सुदीपोस्तु चेत्यादि समुदाहरेत् ॥

इति नागरखण्डात् । आवाहनं स्मृतिषु द्विधा दृश्यते क्वचिदर्घ्यदानोत्तरं क्वचिदर्घ्यपूरणोत्तरम् तत्र यथागृह्यं व्यवस्था । आश्वलायनानां तु अर्घ्यपूरणोत्तरमेव । तद्गृह्यपरिशिष्टे तथैव कथितत्वात् ।

## अथार्घ्यादिविधिः ।

तत्रादौ दैवे स्मृत्यन्तरे-

अथ दर्भान्समास्तीर्य प्रागग्रान्सयवान्भुवि ।
स्थापयेदर्घ्यपात्रे द्वे न्युब्जे तत्र कुशोपरि ॥

द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत् ।

**वशिष्ठः—**

तूष्णीं प्रोक्ष्याम्भसा पात्रे कुर्यादूर्ध्वबिले ततः ।
पूरयेत्पात्रयुग्मं तु कृत्वोपरिपवित्रके ॥ इति ।

**पराशरः—**

प्राङ्मुखोऽमरतीर्थेन शन्नोदेव्युदकं क्षिपेत् ।
यवोसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम् ॥

अत्रोदकक्षेपणे शन्नोदेवीरितिमन्त्रस्य विनियोग उक्तः स शाखान्तरविषयः । बह्वृचानां तु "दर्भान्तर्हितेष्वप आसिच्य शन्नोदेवीरभिष्टय इत्यनुमन्त्र्य तासु तिलानापवति" इतिसूत्रेणानुमन्त्रणस्य विहितत्वात् । पितॄणां विशेषः—

**सङ्ग्रहे,**

पात्रण्यासाद्य चाग्नेयीदिक्संस्थेषु कुशेषु च ।
त्रीँस्त्रींश्च स्थापयेद्दर्भान्प्रत्येकं भाजनत्रये ॥

**गार्ग्यः—**

हस्ते प्रादेशमात्रं तु त्रिवृद्दत्त्वा पवित्रकम् ।
अभ्यर्च्य पूर्वतोऽर्घ्यं वै दद्यात्तु पितृदिङ्मुखः ॥ इति ।

त्रिवृत्=त्रिदलम् । पूर्वतः अर्घ्यदानात्प्राक् ।

**स्मृत्यन्तरे--**

दैव्यर्चा दक्षिणादि स्यात्पादजान्वंशमूर्धनि ।
शिरोंऽशजानुपादेषु वामाङ्गादिषु पैतृके ॥

अर्चा=पूजाऽऽवाहनरूपा ।

**ब्राह्मे--**

ततो वामेन हस्तेन गृहीत्वा चमसान्क्रमात् ।
तत्तोयं दक्षिणे कृत्वा देवतीर्थेन दापयेत् ॥

तत=आवाहनोत्तरम् ।

पितॄणां त्वाहाश्वलायनः-इतरपाण्यङ्गुष्ठान्तरेणोपवीति-

त्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमित्यपूर्वं ताः प्रतिग्राहयिष्यन्सकृत्सकृत्स्वधार्घ्या इति ।

इतरस्य सव्यस्य पाणेरङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेदथ वा सव्यपाणेः शिष्टगर्हितत्वाद्दक्षिणं पाणिं सव्येन गृहीत्वा दक्षिणेनैव पाणिना उपवीत्येव अर्घ्यं प्रयच्छेदिति **नारायणवृत्तिकृत्** । अत्रैकस्यानेकब्राह्मणपक्षे पित्रर्थं यावन्तो ब्राह्मणास्तेभ्यः सर्वेभ्यः प्रथममेकमेव पात्रं विभज्य सकृदेव दद्यात् तथा पितामहार्थेभ्यो द्वितीयं प्रपितामहार्थेभ्यस्तृतीयं सकृदेव । एकैकपक्षे तु एकैकं पात्रमेकैकस्मै दद्यात् । एकपक्षे त्रयोऽप्यर्घ्या एकस्मै क्रमेण देयाः । अर्घ्यदानोत्तरं कृत्यमाह—

**प्रचेताः,**

प्रथमे पितृपात्रे तु सर्वान्सम्भृत्य संस्रवान् ।
पितृभ्यः स्थानमित्युक्त्वा कुर्याद्भूमावधोमुखम् ॥

**संस्रवान्**=अर्घ्यपात्रगतजलशेषान् । उत्तरे द्वे पात्रे प्रथमपात्रे आसिञ्चतीत्यर्थः । तथाच—

**यमः,**

पैतृकं प्रथमं पात्रं तस्मिन्पैतामहं न्यसेत् ।
प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत् ॥ इति ।

दिङ्नियमो **मात्स्ये,**

पितृपात्रे निधायान्यं न्युब्जमुत्तरतो न्यसेत् । इति ।

षड्दैवत्यश्राद्धे आद्यं पात्रद्वयं न्युब्जीकर्त्तव्यमिति सम्प्रदायविदः । मातामहानामप्येवमित्यतिदेशात् ।

**आश्वलायनः—**

नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥

आश्राद्धसमाप्तेरितिशेषः । अर्घ्यपात्राण्याह—

प्रजापतिः,

सौवर्णं राजतं पात्रं खाड्गं मणिमयं तथा ।
यज्ञियं चमसं वापि अर्घ्यार्थं पूरयेद्बुधः ॥

आश्वलायनः—तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वेति ।

अनन्तरं विधेयमाह याज्ञवल्क्यः,

दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ।
अर्घ्योत्तरमुदकदानपूर्वकं गन्धादि दद्यादितिवचोऽर्थः ।

गभस्तिः—

अर्घ्यं पिण्डप्रदानं च स्वस्त्यक्षय्ये तथैवच ।
गन्धपुष्पादिकं सर्वं हस्तेनैव तु दापयेत् ॥

गन्धदानावसरे विशेषमाह गोविन्दार्णवे—

शातातपः,

करे पवित्रं कृत्वा तु गन्धं यस्तु विलिम्पति ।
पितृयज्ञस्य तच्छिद्रं निराशाः पितरो गताः ॥ इति ।

माधवीये यमः,

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत् ॥ इति ।

भिक्षुकानाहात्रिः,

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ इति ।

कूर्मपुराणेऽपि—

अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रचक्षते ।

अतिथिलक्षणमुक्तं विष्णुपुराणे,

अज्ञातकुलनामानमन्यतः समुपागतम् ।
पूजयेदतिथिं सम्यङ्नैकग्रामनिवासिनम् ॥ इति ।

## अथाच्छादनम् ।

हेमाद्रौ पद्मपुराणे—

सम्पूज्य गन्धपुष्पाद्यैर्दद्यादाच्छादनं ततः ।
अधौतं सदशं नूत्नं निश्छिद्रममलीमसम् ॥
तस्याभावे तु देयं स्यात्सवर्णैः क्षालितं तु यत् ।
प्रदेयं पितृकार्येषु कारुधौतं न जातुचित् ॥

कारुः=रजकः ।

प्रभासखण्डे—

आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि ।
आयुःप्रकाममैश्वर्यं रूपं च लभते तु सः ॥

अहतलक्षणमाह—

प्रचेताः,

ईषद्धौतं नवश्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ इति ।

ईषद्धौतमकारुधौतमिति हेमाद्रिः ।

भगवतीपुराणे—

अधरीयोत्तरीयार्थमुद्दिश्यैकैकमादरात् ।
वासोयुगं प्रदातव्यं पितृकृत्ये विपश्चिता ॥
निष्क्रयो वा यथाशक्ति वस्त्रालाभे प्रदीयते ।

ब्रह्मवैवर्त्ते—

यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता ।
पितॄणां वस्त्रदानस्य फलं तेनाप्नुतेऽखिलम् ॥

समर्थस्य निष्क्रयोऽसमर्थस्य यज्ञोपवीतमिति व्यवस्थितविकल्पः ।

विष्णुधर्मोत्तरे—

स्त्रीणां श्राद्धे तु सिन्दूरं दद्युश्चण्डातकानि च ।

निमन्त्रिताभ्यः स्त्रीभ्यो ये ते स्युः सौभाग्यसंयुताः ॥

चण्डातकानि स्त्रीपरिधानोचितान्यंशुकानीति हेमाद्रिः ।(१)

ब्रह्माण्डे--

नामापि न ग्रहीतव्यं नीलीरक्तस्य वाससः ।
दर्शनात्कीर्त्तनान्नील्या निराशाः पितरो गताः ॥

इत्याच्छादननिरूपणम् ।

पूर्वं वस्त्रप्रतिनिधित्वेनोपवीतदानमुक्तमधुना सत्यपि वस्त्रे गन्धपुष्पादिवन्मुख्यतयैव यज्ञोपवीतं दातव्यमित्युच्यते ।

हेमाद्रावादित्यपुराणे—

पितॄन्सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकम् ।
यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलम् ॥
तस्माद्यज्ञोपवीतस्य दानमावश्यकं स्मृतम् । इति ।(२)

कालिकापुराणे—

निर्वर्त्य ब्राह्मणादेशात्क्रियामेवं यथाविधि ।
पुनर्भूमिं च संशोध्य पङ्क्तेरन्तरमाचरेत् ॥
भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात् ।

भूशोधनमर्चनप्रसङ्गात्पतितगन्धपुष्पदर्भापनयनम् । अन्तरं=विच्छित्तिः । भोजनपात्राधोभूमौ मण्डलमाह—

---

(१) अत्र—स्त्रीश्राद्धेषु प्रदेयाः स्युरलङ्कारास्तु योषिताम् ।
मञ्जीरमेखलादानकर्णिकाकङ्कणादयः ॥
तथाञ्जनशलाकाश्च केशानां च प्रसाधनम् ।
इत्यधिकं द्वि० पु० ।

(२) अत्र—एतच्च वैश्वदेवं काण्डमुदङ्मुखः पित्र्यं दक्षिणामुखः कुर्यात् ।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानतः ॥
इति शातातपवचनात् । इत्यधिकं द्वि० पु० ।

शङ्खः,

आदित्या वसवो रुद्रा ब्रह्मेन्द्रार्कनिशाकराः ।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥

बौधायनः--

चतुरस्रं त्रिकोणं च वर्त्तुलं चार्द्धचन्द्रकम् ।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥

बह्वृचपरिशिष्टे-दैवे चतुरस्रं पित्र्ये वृत्तमिति ।

तत्साधनानि ब्राह्मे--

मण्डलानि च कार्याणि नीवारैः सक्तुभिः शुभैः ।
गौरमृत्तिकया वापि भस्मना गोमयेन वा ॥ इति ।

तन्निर्माणप्रकारः स्मृत्यन्तरे—

नैर्ऋतीं दिशमारभ्य ईशान्यन्तं समापयेत् ।
तामेव दिशमारभ्य दैविकस्य तदन्तिके ॥
ईशानीं दिशमारभ्य नैर्ऋत्यामप्रदक्षिणम् ।
तामेव दिशमारभ्यपै तृकस्य तदन्तिके ॥

मण्डलाकरणे दोषश्रुतिः—

मार्कण्डेयपुराणे,

यातुधानाः पिशाचाश्च क्रूराश्चैव च राक्षसाः ।
हरन्ति रसमन्नस्य मण्डले हि विवर्जिते ॥

श्राद्धदीपकलिकायां मात्स्ये--

अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥ इति सङ्क्षेपः ।

अथाग्नौकरणम् ।

हेमाद्रौ याज्ञवल्क्यः,

अग्नौकरिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥

हुत्वा जहुयादित्यर्थः । तच्च—

स्मार्त्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकाले हृते वापि श्रौतं वैतानिकाग्निषु ॥

इति याज्ञवल्क्यवचनादौपासनेऽग्नौ कार्यम् । तत्र सर्वेषामौपासन एव प्राप्ते क्वचिद्विशेषमाह—

मार्कण्डेयः,

आहिताग्निस्तु जुहुयाद्दक्षिणेऽग्नौ समाहितः ।
अनाहिताग्निश्चौपसदे अग्न्यभावे द्विजेऽप्सु वा ॥ इति ।

अग्न्यभावे=उभयविधाग्न्यभावे । औपसदे=गृह्याग्नौ द्विजे=द्विजपाणौ । आहिताग्निः=सर्वाधानी । अर्धाधानिगृह्याग्निमतो गृह्याग्निसद्भावात्तत्रैव भवति । इदं च सर्वाधानिनो दक्षिणाग्नावग्नौकरणं दर्श एव ।

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

इति लौगाक्षिक्रमोक्तविहृतदक्षिणाग्निसद्भावात् । वार्षिकादौ तु सर्वाधानी पाणौ कुर्यात्तादृशाग्नेरभावात् । इतरो गृह्य एव । वृत्तिकारस्त्वाश्वलायनस्याहिताग्नेः सर्वत्र पाणिहोममेवाह । अनुष्ठानमप्याश्वलायनानां वृत्त्यनुसार्येवास्तीत्यलं निष्कृष्टेन ।

आश्वलायनः—

अभ्यनुज्ञायां पाणिष्विति ।

अत्र वृत्तिः । पाणिष्विति बहुवचननिर्देशात्सर्वविप्रपाणिषु होम इति ।

शौनकोऽपि—

सर्वेषामुपविष्टानां विप्राणामथ पाणिषु ।
विभज्य जुहुयात्सर्वं सोमायेत्यादिमन्त्रतः ॥

यत्तु कात्यायनवचनम्—

पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनाग्निकः ।

हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥ इति,

तद्बह्वृचातिरिक्तपरमिति केचित् । मम तु प्रतिभाति अनग्निकपदवैयर्थ्यापातादनग्निकबह्वृचस्यैकत्रैवेति । अनग्निकस्य दैवब्राह्मणहस्ते होममाह—

मदनरत्ने यमः,

अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम् ।

पित्र्यविप्रैरनुज्ञातो विश्वेदेवेषु हूयते ॥

जुहोतीत्यर्थः । एवं चात्रानग्निकस्याग्नौकरणहोमे पित्र्यविप्रहस्तदैवविप्रहस्तयोर्विकल्पः । (१)अग्न्यभावे तु सर्वेषां पाणिहोम एव ।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।

यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ॥

इति मनूक्तेः ।

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे ।

अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न बिन्दति ।

इति जातूकर्ण्यवचनाच्च । तैत्तिरीयाणामेतावान्विशेषः अग्न्यभावे पाणिहोमो न किन्तु लौकिकाग्नौ ।

नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ॥

सन्धायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः ॥

इति वचनात् । कश्चित्साग्नेरपि पाणिहोमः । तथाच—

गृह्यपरिशिष्टे,

अन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम् ।

(१) अत्र-यमः-दैवविप्रकरेऽनग्निर्हुत्वाग्नौकरणं द्विजः ।
हुत्वा पितृभ्यः शेषात्तु पिण्डार्थं स्थापयेत्पुनः ॥
इत्यधिकं पुस्तकान्तरे ।

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥ इति ।

एकोद्दिष्टं=सपिण्डीकरणम् । केवले तदभावात् । हुतावशिष्टप्रतिपत्तिमाह—

यमः,

पित्र्यपाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत् ।
अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके ॥

## अथ परिवेषणम् ।

शौनकः—

हुत्वाग्नौ परिशिष्टं तु पितृपात्रेष्वनन्तरम् ।
निवेद्यैवापसव्येन परिवेषणमाचरेत् ॥

व्यासः—

आज्याहुतिं विना चैव यत्किञ्चित्परिविष्यते ।
दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥

शौनकः—

पाकं सर्वमुपानीय सम्वेद्य च पृथक्पृथक् ।
विधिना दैवपूर्वं तु परिवेषणमाचरेत् ॥

यजमानेन परिवेषणे क्रियमाणे फलानन्त्यमाह—

धर्मः,

फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषणे । इति ।

भविष्ये—

भार्यया श्राद्धकाले तु प्रशस्तं परिवेषणम् ।

ब्रह्माण्डे—

नापवित्रेण नैकेन हस्तेन न विना कुशम् ।
नायसेनायसेनैव(१) श्राद्धे तु परिवेषयेत् ॥

---

(१) अत्र अयसेन=अयत्नेनेत्यर्थः । नापसव्येनेति क्वचित्पाठः ।

पराशरः--

सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः ।
भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः ॥

कार्ष्णाजिनिः--

दर्व्या देयं शृतान्नं च समस्तव्यञ्जनानि च ।
उदकं (१)यच्च पक्वान्नं नो दर्व्या दातुमिच्छति ॥
स चोरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत् ।

सङ्ग्रहे--

हस्तदत्तं तु नाश्नीयाल्लवणं व्यञ्जनं तथा ।
अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ॥

घृतपात्रस्थापने विशेषो—

मदनरत्ने,

घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्र इति ।

ग्रन्थान्तरे—

ओदने परमान्ने च पात्रमासाद्य मुग्धधीः ।
घृतेन पूरयेत्पात्रं तद्घृतं रुधिरं भवेत् ॥

एवंविधपरिवेषणानन्तरं कर्त्तव्यमाह—

पारस्करः,

सङ्कल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः ।
श्राद्धं निवेद्यापोशानं जुषप्रैषोऽथ भोजनम् ॥

सङ्कल्पप्रकारस्तु प्रयोगे वक्ष्यते । अत्र अन्नसङ्कल्पोत्तरं गायत्रीजपपूर्वकं मधुमतीः पठित्वापोशनार्थं जलं दत्वा जुषध्व-मिति प्रैषेण भोजनानुज्ञापनं कार्यमिति वचनार्थः । एवं चात्र सावित्रीजपानन्तरमपोशानदानमुक्तम् । विपरीतमाह—

प्रचेताः,

अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।

---

(१) अत्र यवपक्वान्नमिति पा० द्वि० पु० ।

मधुव्वाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा ॥

अत्र पारस्करवचनं बह्वृचपरम्, प्रचेतोवचनं तदन्यपरं बोध्यम् ।

उपवीत्यन्नेषु मधु सर्पिर्वासिच्य सप्रणवव्याहृतिं सावित्रीं मधुमतीश्च जपित्वा मध्विति च त्रिरुक्त्वा पितॄननुस्मृत्यापोशानं दत्वापः प्रदाय ब्राह्मणान्यथासुखं जुषध्वमिति भोजनायातिसृजेत् । इति बह्वृचगृह्यपरिशिष्टात् ।

याज्ञवल्क्यः—

सव्याहृतिकां गायत्रीं मधुव्वाता इति त्र्यृचम् ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥

यथासुखमित्यनन्तरं जुषध्वमितिशेषः पूरणीयः । वाग्यताः=वाचायताः नियताः अधिकं न वदेयुरित्यर्थः । न तु मौनिनः अनुपदम् "अपेक्षितं याचितव्यं" इति वक्ष्यमाणवचनविरोधात् । श्राद्धभोक्तारो बलिं न दद्युः ।

दत्ते वाप्यथवादत्ते भूमौ यो निक्षिपेद्बलिम् ।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतम् ॥

इति पराशरमाधवधृतात्रिवचनात् : दत्ते=त्यक्ते अदत्ते=अत्यक्ते । पाराशरीये—

शङ्खः,

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

तदन्नं=पात्रगतम् । स्पर्शोत्तरमन्यदन्नं न गृह्णीयादिति फलितोऽर्थः । उच्छिष्टान्नेन स्पर्शे तु—

स एव,

उच्छिष्टलेपसंस्पर्शे प्रक्षाल्यान्येन वारिणा ।
भोजनान्ते नरः स्नात्वा गायत्रीत्रिशतं जपेत् ॥ इति ।

अत्रापि भोजनं तावतोऽन्नस्यैव। भोजनभाजनस्यैव स्पर्शे त्वाह—

व्यासः,

उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहृत्य च।
सर्वान्नं पूर्ववत्क्षिप्त्वा भोजयेत्तु द्विजोत्तमम्॥ इति।

हेमाद्रावत्रिः—

हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि गुणान्वदेत्।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वापि तत्॥
प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽथवा।
अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः॥
पीतावशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत्।
खादितार्धात् पुनः खादेन्मोदकानि फलानि वा॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगातिम्॥ इति।

उसना,

भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथञ्चन।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च॥

वृद्धशातातपः—

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम्।
न याचते द्विजो मूढः स भवेत्पितृघातकः॥

यत्तु—

श्राद्धे द्विजो नैव दद्यान्न याचेन्नैव दापयेत्।
इति वचस्तदयाचितद्रव्यविषयम्।

प्रचेताः—

भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणम्।
जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः॥

भोजनोत्तरकृत्यमाहाश्वलायनः—तृप्तान् ज्ञात्वा मधुमतीः

श्रावयेदक्षन्नमीमदन्तेति च सम्पन्नं पृष्ट्वेति ।

## अथ पिण्डदानम् ।

तत्कालमाहाश्वलायनः, भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेष्वेके इति ।

सर्वश्राद्धेषु भोजनोत्तरमेवेति ग्रन्थकृतः । तद्देशमाह—

याज्ञवल्क्यः,

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवत् ॥

उच्छिष्टसान्निधिलक्षणमुक्तमत्रिणा—

पितॄणामासनस्थानादग्रतस्त्रिष्वरात्निषु ।
उच्छिष्टसान्निधानं तन्नोच्छिष्टासनसन्निधौ ॥

सार्धद्वाविंशत्यङ्गुलात्मकोऽरात्निः । अत्र विशेषमाह—

देवलः,

उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम् ।
मण्डलं चतुरस्रं वा दक्षिणावनतं महत् ॥

स्थानं वेदिः । इदं च वेदिकरणं येषां सूत्रे वेदिरुक्ता तान्प्रत्येव । इतरान्प्रति—

मात्स्ये,

सूपलिप्ते महीपृष्ठे गोशकृन्मूत्रवारिणा ।

पिण्डान्दद्यादितिशेषः । अत्र महीपृष्ठाधारत्वविधानाद्वज्रवैडूर्यप्रवालाश्मदारुशुक्त्यादिरचिते स्थले पिण्डदानं न कार्यमिति महर्षितात्पर्यम् । असावुच्छिष्टसान्निधिरूपः पिण्डदानदेशस्त्वनग्रेः साग्निस्त्वग्निसमीपे पिण्डान्दद्यादिति । (१)तदितिकर्त्तव्यतामाहाश्वलायनः—

(१) अत्र—अनेकदेवत्यश्राद्धे पिण्डस्थानमाह—शाङ्खायनः, पित्रादिपिण्डानां पश्चिमभागे मात्रादिभ्यो देयमिति । पुस्तकान्तरेऽधिकः पाठः ।

स्फ्येन लेखामुल्लिखेत् अपहता असुरा रक्षांसि वेदिषद इति तामभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तीर्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति तस्यां पिण्डान् निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ ये च त्वामत्रानु इति।

स्फ्याभावे कुशैर्लेखाकरणम्। तदुक्तम्—

ब्रह्माण्डे,

वज्रेण वा कुशैर्वापि उल्लखेत महीं द्विजः। इति।

वज्रः=स्फ्यः। एकेन प्रयत्नेन छिन्नाः कुशाः सकृदाच्छिन्नाः। अत्र=षड्दैवत्यादिश्राद्धे—

योज्यः पित्र्यादिशब्दानां स्थाने मातामहादिकः।

इत्यापस्तम्बोक्तेर्मातामहादिवर्गस्यापि सम्बन्धनामगोत्राणि प्रयोज्यानि। बह्वृचानामवनेजनमन्त्रे शुन्धन्तां पितर इत्यादिके शुन्धन्तां मातरः शुन्धन्तां मातामहा इत्यादिरूहस्तस्मिन्सूत्रे पितामहप्रपितामहोपादानेन पितृशब्दस्य जनकपरत्वात्। ये च त्वामितिमन्त्रे मातृवर्गे याश्च त्वामित्यूह इति हेमाद्रिः। अत्र हेतात! एतत्पिण्डरूपमन्नं ते तुभ्यं ये चान्येऽत्र त्वामनु यान्ति तेभ्यश्चेति मन्त्रार्थः। अनुयायिनश्च पुंसां पुमांसः स्त्रीणां स्त्रिय एवेति प्रमाणाभावात्स्त्रीणामपि पुरुषानुयायित्वस्य पुरुषाणामपि स्त्र्यनुयायित्वस्य च सम्भवात् हेमाद्र्युदाहृत ऊहो न कार्यः। एवं 'तिलोऽसि''अत्रपितरः''अमीमदन्तपितरः''एतद्वः पितरः' 'नमो वः पितरः''मनोन्वाहुवामहे परेतनपितर'इत्यादिमन्त्रगतपितृशब्दस्य सपिण्डीकरणजन्यापितृभावपरत्वात्प्रकृतिवन्मातृमातामहादिश्राद्धेऽपि समवेतार्थत्वादर्थान्तराभावादनूह इति हृदयम्। असावित्यनेन सम्बन्धनामगोत्रग्रहणं ज्ञाप्यते।(१)

(१) अत्र—पिण्डदानं सव्यं जान्वाच्य कार्यम्।

विष्णुः-दर्भमूले करावघर्षणमिति ।

आश्वलायनः-निपृतानतुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति सव्यावृदुदगावृत्त यथाशक्ति प्राणान नासित्वाभिपर्यावृत्याऽमीमदन्तपितरो मादयध्वं यथाभागमावृषा· यिषतेतिचरोः प्राणभक्षं भक्षयेन्नित्यं निनयनमसावभ्यङ्क्ष्वासाव· ङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने वासो दद्यादशामूर्णास्तुकां वा प· श्चाशाद्वर्षताया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मानोतोऽन्यत्पित- रो युङ्ध्वमिति ।

ब्राह्मे—

क्षौमं सूत्रं नवं दद्याच्छाणं कार्पासमेव च ।
कृष्णोर्णानीलरक्ताक्तकौशेयानि विवर्जयेत् ॥ इति ।

क्षौममतसीवृक्षभवम् ।

व्याघ्रः—

गन्धपुष्पाणि धूपं च दीपं च विनिवेदयेत् ।
दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ॥

आश्वलायनः—अथैतानुपतिष्ठेत नमोवः पितर इषे नियच्छतेति ।

अथ पिण्डपरिमाणमाह हेमाद्रावङ्गिराः,

कपित्थबिल्वमात्रान्वा पिण्डान्दद्यात्समाहितः ।
कुक्कुटाण्डप्रमाणान्वा यदिवामलकैः समान् ॥
बदरेण समान्वापि दद्याच्छ्रद्धासमन्वितः । इति ।

श्राद्धभेदेन पिण्डपरिमाणभेदमाहुरन्त्येष्टिपद्धतावस्मन्मातुः पितामहचरणाः—

एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।

---

मधुसर्पिस्तिलयुतान् पिण्डांस्त्रीन्निर्वपेद्बुधः ।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥
इति वायुपुराणात् । इत्यधिकं द्वितीयपुस्तके ।

नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
तीर्थे दर्शे च सम्प्राप्ते कुक्कुटाण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपमम् ॥ इति ।

अथ विकिरेतिकर्त्तव्यता ।

ब्रह्माण्डपुराणदेवलस्मृत्योः,
ततो विकिरणं कुर्याद्विधिदृष्टेन कर्मणा ।
ततः सर्वाशनं पात्रे गृहीत्वा विविधं बुधः ॥
तेषामुच्छेषणस्थाने तेन पात्रेण निक्षिपेत् ॥ इति ।

अथ पिण्डदानकाले मार्जारादिना पिण्डोपघाते स्मृतिदर्पणेऽत्रिः—
मार्जारमूषकस्पर्शे पिण्डे च द्विदलीकृते ।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥

बौधायनः—
श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते ।
प्राजापत्यं चरित्वाथ पुनः पिण्डं समाचरेत् ॥

अथ पिण्डप्रतिपत्तिमाह याज्ञवल्क्यः,
पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेद्दक्षिणामीक्षन् दिशं पितृपरायणः ॥ इति ।

कामनाविशेषे आश्वलायनः—पिण्डानां मध्यमं पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथायमरपा असदिसप्स्वितरावतिप्रणीते वेति ।

यमः—
अप्स्वेकं प्लावयेत्पिण्डमेकं पत्न्यै निवेदयेत् ।
एकं च जुहुयादग्नौ त्रयः पिण्डाः प्रकीर्त्तिताः ॥ इति ।

पत्न्या असान्निधानादावापस्तम्बः—
यदि पत्नी विदेशस्था उत्सृष्टा यदि वा मृता ।
दुरात्माऽननुकूला वा तस्य पिण्डस्य का गतिः ॥

आकाशं गमयेत्पिण्डं जलस्थो दक्षिणामुखः । इति ।

अनेकभार्यापक्षे छागलेयः—

प्राचीनावीतमामन्त्र्य पत्नीपिण्डो विभज्यते ।
प्रतिपत्न्यस्य मन्त्रस्य कर्त्तव्यावृत्तिरत्र तु ॥ इति ।

पत्नीविशेषनिषेधः स्मृत्यन्तरे—

अक्षता गुर्विणी बन्ध्या गलरक्ता रजस्वला ।
नाश्नीयान्मध्यमं पिण्डं जारिणी च प्रसूतिका ॥ इति ।

न विद्यते क्षतं रजो यस्याः साऽक्षता ।

सङ्ग्रहे—

षट्कयोगे तु पिण्डानां प्राशनं मध्ययोर्द्वयोः । इति ।

मनुरपि—

पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डद्वयमद्यात्सुतार्थिनी ॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं सात्विकं धार्मिकं तथा ॥ इति ।

गृह्यपरिशिष्टे—वीरं मे दत्त पितर इत्यादायेति ।

इदं चादानं भर्त्तुरेव न तु पत्न्याः यमवचनेन पत्न्यै भर्तृकर्तृकस्य दानस्य विहितत्वात् । कामनाविशेषे—

हेमाद्रौ ब्रह्माण्डे,

पिण्डमग्नौ सदा दद्याद्भोगार्थी प्रथमं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम् ।
उत्तमां गतिमन्विच्छन् गोषु नित्यं प्रयच्छति ।
आज्ञां प्रजां यशः कीर्त्तिमप्सु पिण्डं प्रवेशयेत् ॥
प्रार्थयन्दीर्घमायुष्यं वायसेभ्यः प्रयच्छति ।
सौकुमार्यमथान्विच्छन्कुक्कुटेभ्यः प्रयच्छति ॥
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च ॥ इति ।

षट्त्रिंशन्मते—

यदुक्तं पिण्डदानस्य तत्कार्यं विकिरस्य च ।
क्षिपेत्पिण्डान् जलेऽग्नौ तु विकिरं तत्र निक्षिपेत् ॥ इति।

अथ सुप्रोक्षितादयः पदार्थाः ।

मात्स्ये—

तथाचान्तेषु चाचम्य वारि दद्यात्सकृत्सकृत् ।
तथा पुष्पाक्षतान्पश्चादक्षय्योदकमेव च ॥

विष्णुः—

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः ।
दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄन् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्त्विति ॥

बौधायनः—

अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥

प्रचेताः—

ततस्तूत्थापयेत्पिण्डान्विप्रपात्राणि चैवहि । इति ।

विप्रपात्रोचालनकर्त्तारो भविष्योत्तरे—

चालयेद्विप्रपात्राणि स्वयं शिष्योऽथवा सुतः ।
न स्त्री प्रचालयेत्तानि हीनजातिर्न चाग्रजः ॥

अग्रजो=ज्येष्ठभ्राता । यजमानमपेक्ष्याधिकवयस्को वेति हेमाद्रिः ।

अथोच्छिष्टोद्वासनकालः ।

कूर्मपुराणे—

नोद्वासयेत्तदुच्छिष्टं यावन्नास्तमितो रविः । इति ।

गृहान्तराभावे जघन्यं कालमाह—

मनुः,

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ इति ।

तत्प्रतिपत्तिमाह जातूकर्ण्यः,

द्विजभुक्तावशिष्टं तु सर्वमेकत्र संहरेत् ।
शुचिभूमौ प्रयत्नेन निखन्याच्छादयेद्बुधः ॥

ब्रह्माण्डे—

शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्याद्रागतो मोहान्न तद्गच्छति वै पितॄन् ॥

बृहस्पतिः—

भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतम् ॥ इति ।

अथ विप्रवमने ।

अथ श्राद्धे पिण्डदानात्प्राक् ब्राह्मणवमने विशेष उक्तः—

सङ्ग्रहे,

अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् ।
पुनः पाकात्तु कर्तव्यं पिण्डदानं यथाविधि ॥ इति ।

अत्र पुनः पाकविधानेन श्राद्धस्य पुनरावृत्तिर्विधीयते । तदुक्तम्—

तत्रैव,

अकृते पिण्डदाने तु पिता यदि वमेत्तदा ।
तद्दिने चोपवासं च पुनः श्राद्धं परेऽहनि ॥

एतच्च प्रतिसांवत्सरिकविषयम् । अमावास्यादौ तदेव आमश्राद्धं कार्यम् । तदाह —मरीचिः,

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादि नियतं मासंसवत्सरादृते ॥ इति ।

अत्र पूर्वोक्तवचने पिता यदि वमेदिति पितुर्ग्रहणात् पितामहप्रपितामहार्थब्राह्मणवमने न दूषणं न च श्राद्धावृत्तिरिति ।

उक्तं चैतत् प्रतापनारसिंहाख्यग्रन्थे,

अकृते पिण्डदाने तु ब्राह्मणो वमते यदि ।
पुनः पाकं च वै कृत्वा श्राद्धं कुर्यात्प्रयत्नतः ॥ इति ।

अत्र मूलं मृग्यम् ।

## अथ दक्षिणादानम् ।

हेमाद्रौ सौरपुराणे,

बह्वीभिर्दक्षिणाभिर्यः श्राद्धे प्रीणयते द्विजान् ।
स पितॄणां प्रसादेन याति स्वर्गमनन्तकम् ॥
अशक्तस्तु यथाशक्त्या श्राद्धे दद्यात्तु दक्षिणाम् ।
अदक्षिणं तु यच्छ्राद्धं ह्रियते तद्धि राक्षसैः ॥

## दक्षिणाद्रव्याणि ।

मत्स्यपुराणे—

सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम् ।
गोभूहिरण्यवासांसि यानानि शयनानि च ॥
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च ।
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन् ॥

नामगोत्रेण सम्प्रदानस्यात्मनश्च नामगोत्रोच्चारणेनेत्यर्थः ।

नामगोत्रे समुच्चार्य सम्प्रदानस्य चात्मनः ।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंत्रयम् ॥

इति व्यासोक्तेः ।

वह्निपुराणे—

भक्त्याथ दक्षिणा देया श्राद्धकर्मणि शक्तितः ।
सुवर्णरत्नवासांसि रजतं भूषणानि च ॥
अनडुहो महिष्यश्च विविधान्यासनानि च ।
येन येनोपयोगोऽस्ति विप्राणामात्मनस्तथा ॥
तत्तत्प्रदेयं श्राद्धेषु दक्षिणार्थं हितैषिणा । इति ।

अतिदरिद्रस्य दक्षिणोक्ता सौरपुराणे—

यज्ञोपवीतमथवा ह्यतिदारिद्र्यपीडितः ।
प्रदद्याद्दक्षिणार्थं वै तेन स्यात्कर्म सद्गुणम् ॥

दक्षिणादाने क्रममाह वृद्धमनुः,

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः । इति ।

द्वयोः=वैश्वदेविकविप्रयोः ।

जमदग्निः,

सर्वं कर्मापसव्येन दक्षिणादानवर्जितम् ।
अपसव्यं तु तत्राह मत्स्यो हि भगवान्मनुः ॥

अतोऽत्र विकल्पः—

विष्णुः,

मन्त्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ! ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥ इति ।

## अथ वैश्वदेवः ।

तत्कालो हेमाद्रौ ब्रह्माण्डपुराणे,

वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात् ।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम् ॥ इत्येकः

कालः । अर्वाग्ब्राह्मणभोजनादित्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तमिति हेमाद्रिः । द्वितीयो भविष्ये,

पितॄन्सन्तर्प्य विधिवद्बलिं दद्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥ इति ।

बलिशब्दार्थस्तत्रैवोक्तः—

ये अग्निदग्धामन्त्रेण भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर ! श्राद्धकर्मणि सर्वदा ॥

तृतीयोऽपि तत्रैव—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप ! ॥ इति ।

तदेवमनाहिताग्नेरग्नौकरणविकिरदानद्विजविसर्जनरूपकाल-त्रयव्यवस्थोक्ता—

स्मृतिसङ्ग्रहे,

वृद्धावादौ क्षयाहेऽन्ते दर्शे मध्ये महालये ।
आचान्तेषु तु कर्त्तव्यं वैश्वदेवं चतुर्विधम् ॥ इति ।

अत्र वृद्धाचारतोऽनुष्ठानं बोध्यम् । अथवा शाखाभेदेन । तथाच—

गोविन्दार्णवे,

याजुषाः सामगाः पूर्वं मध्ये जुह्वति बह्वृचाः ।
अथर्वाङ्गिरसश्चान्ते वैश्वदेवेष्वयं विधिः ॥ इति ।

बहुस्मृत्युक्तत्वादन्त एवेति शिष्टाः । तत्रादौ मध्ये वा वैश्वदेवानुष्ठाने पृथक्पाकः कार्यः ।

पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् ॥

इति लौगाक्षिवाक्यात् । दार्शं श्राद्धीयम् ।

गृह्याग्निशिशुदेवेभ्यो यतये ब्रह्मचारिणे ।
श्राद्धपाको न दातव्यो यावत्पिण्डान्न निर्वपेत् ॥

इति स्मृत्यन्तराच्च । यदा त्वन्ते तदा श्राद्धशेषेणैव । श्राद्धे हि श्राद्धशेषेण वैश्वदेवं समाचरेत् ।

इति चतुर्विंशतिमतात् । हेमाद्र्यादिष्वप्येवम् । साग्निस्त्वैकादशाहिकं विसृज्य सर्वत्रादौ पृथक्पाकेनैव वैश्वदेवं कुर्यात् ।

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं च साग्निकः ।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥

इति सालङ्कायनवचनात् ।

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

इति परिशिष्टाच्च । दर्शे साग्नेर्विशेषमाह—

लौगाक्षिः,

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ।

पक्षान्तं कर्मान्वाधानम् । अनु पश्चात्पिण्डपितृयज्ञादाह्रियते क्रियते इत्यन्वाहार्यं दर्शश्राद्धम् । अत्र वैश्वदेवस्यान्वाधानपिण्डपितृयज्ञयोर्मध्ये विधानादेव साग्निककर्तृत्वे सिद्धे साग्निकपदोपादानं श्रौताग्निमत एव ग्रहणार्थम् । पिण्डपितृयज्ञाकरणे प्रायश्चित्तमाह—

कात्यायनः,

पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥ इति ।

सर्वेषां भोजनं तु श्राद्धशेषेणैव न तु वैश्वदेवनिमित्तपृथक्पाकशेषेण ।

ततश्च वैश्वदेवान्ते सभृत्यः सहबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥

इति मात्स्यात् ।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।

इति याज्ञवल्क्यवाक्याच्च । नन्वयं भोजनविधिरुत रागप्राप्तभोजनानुवादेन श्राद्धशेषविधिः । तत्र भोजनस्य रागतो नित्यमप्राप्तेर्नित्यवच्छ्रवणाभावान्न श्राद्धशेषविधिर्वक्तुं शक्यः । अतः पयोव्रतं ब्राह्मणस्येतिवत्प्रकरणाच्छ्राद्धाङ्गत्वेन भोजनक्रियैव विधीयते । इतरथात्रापि व्रतानुवादेन पयस एव विधिः स्यात् । भोजनं च यदा ब्राह्मणैः शेषमन्नमभिमतं तदा, शेषाभावाल्लुप्यते न्यायात्, तथापि श्राद्धकर्तुस्तद्दिने उपवासे देवलवचनेन दोषश्रवणात्पाकान्तरमुत्पाद्य कार्यमेव अशेषनाशे आज्येन स्विष्टकृद्याग इव । तत्र भोजनकालमाह—

जातूकर्ण्यः,

अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः ।
अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते ॥

अथासगोत्रश्राद्धे शेषान्नं न भोक्तव्यमित्याह —

जाबालिः,

विप्रस्त्वन्यगृहे श्राद्धशिष्टान्नभोजनं चरेत् ।
प्राजापत्यं विशुद्धिः स्यात् ज्ञातिगोत्रे न दोषकृत् ॥

स एव—

श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः ॥
एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते । इति ।

श्राद्धदिने उपवासनिषेधमाह--

देवलः,

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥ इति ।

नित्योपवासप्राप्तौ व्यासः,

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥ इति ।

अत्र नित्य इत्यविवक्षितम् अनुवाद्यविशेषणत्वात् । अतः काम्योपवासेऽप्याघ्रेयमेव ।

## अथ श्राद्धदातृभोक्त्रोर्नियमः ।

गौतमः—

भोक्ष्यन्करिष्यन्यः श्राद्धं पूर्वरात्रौ प्रयत्नतः ।
व्यवायं भोजनं चैव ऋतौ चापि विवर्जयेत् ॥

पूर्वरात्रौ=श्राद्धाहात्पूर्वरात्रौ ।

मनुः—

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा ।

नच च्छन्दांस्यधीयाति तस्य श्राद्धं प्रचक्षते ॥

शातातपः--

श्राद्धं दत्वा च भुक्त्वा च मैथुनं योऽधिगच्छति ।
भवन्ति पितरस्तस्य तं मासं रेतसांभुजः ॥

जाबालिः—

ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम् ।
रत्यौषधिपरान्नानि श्राद्धकर्त्ता तु वर्जयेत् ॥

वृद्धमनुः—

निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम् ।
प्रमत्ततां च स्वाध्यायं क्रोधाशौचे तथानृतम् ॥

वाराहे—

न शक्नोति स्वयं कर्त्तुं यदा ह्यनवकाशतः ।
श्राद्धं शिष्येण पुत्रेण तदान्येनापि कारयेत् ॥
नियमानाचरेत्सोऽपि विहितांश्च वसुन्धरे ! । इति ।

हारीतः—

पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत् ॥

एतेषामवर्जने दोषमाह—

स एव,

अध्वनीनो भवेदश्वः पुनर्भुग्वायसः स्मृतः ।
कर्मकृज्जायते दासो दरिद्रस्तु प्रतिग्रहात् ॥
क्षयी भवति होमेन सूकरो मैथुनेन च ।
आयुश्चैव क्षयं याति दानं भवति निष्फलम् ॥

मात्स्ये—

पुनर्भोजनमध्वानं भारमायासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वापं च सर्वदा । इति ।

भविष्ये—

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत यजेच्च जुहुयादपि ॥ इति ।

## अथ नित्यश्राद्धम् ।

मार्कण्डेयपुराणे—

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च ।
पितॄनुद्दिश्य विप्रांश्च भोजयेद्विप्रमेव वा ॥ इति ।

तच्च यत्स्वयमन्नमत्ति तेनैवान्नेन कार्यम् । तथाच—

हेमाद्रौ ब्रह्माण्डे,

यदन्नः पुरुषस्तु स्यात्तदन्नास्तस्य देवताः ।
नित्यश्राद्धे ततो दद्याद्भुङ्क्ते यत्स्वयमेव हि ॥

अनेन हि निषिद्धान्ने शाकादिपदार्थानुज्ञा कृता भवति । उत्तमान्नसद्भावे तु जघन्यं न दद्यात् । तदाह—

देवलः,

अघृतं भोजयन् विप्रं स्वगृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मिष्टमन्नं स्वयं भुक्त्वा पश्चात्कदशनं लघु ।
ब्राह्मणं भोजयन्विप्रो निरये चिरमावसेत् ॥ इति ।

व्यासः—

एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही । इति ।

एतदसमर्थस्य । समर्थस्य तु बहवो विप्राः पूर्वोक्ता भूयासुः । एकासामर्थ्येऽपि—

कात्यायनः,

अदैवं नास्ति चेदन्नं भोक्ता भोज्यमथापि वा ।
अभ्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् । इति ।

उद्धृतस्य प्रतिपत्तिः--

कूर्मपुराणे,

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥ इति ।

तत्र कांश्चित्पदार्थान्निषेधति—

प्रचेताः,

नामन्त्रणं न होमश्च नाह्वानं न विसर्जनम् ।
न पिण्डदानं न सुरा न दद्यात्तत्र दक्षिणाम् ॥ इति ।

अत्र--

उपवेश्यासनं दत्त्वा सम्पूज्य कुसुमादिभिः ।
निर्दिश्य भोजयित्वा तु किञ्चिद्दत्त्वा विसर्जयेत् ॥

इति तेनैवोक्तत्वाद्दक्षिणाविकल्पो बोध्यः ।

व्यासः-

नित्यश्राद्धे तु गन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः ।
सर्वोन्सितगुणान् सम्यक् सहैवोद्दिश्य भोजयेत् ॥
आवाहनं स्वधाकारं पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमा विश्वेदेवा न चैवहि ॥ इति ।
एतत्प्रमादादिवा न कृतं चेद्रात्रौ कार्यम् ।
रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत् ।
ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः ॥

इति सङ्ग्रहोक्तेः । यत्र प्रसङ्गेन नित्यश्राद्धं सिद्ध्यति तत्र पृथक् न कार्यम् ।

तदुक्तम्—

प्रयोगपारिजाते,

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्ध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र कर्त्तव्यमिति निश्चयः ॥ इति ।

(१)श्राद्धान्तरे=एकदेवताके । अन्यत्र=भिन्नदेवताके वार्षिकादिके कृते कार्यमिति निश्चयः । तच्च वार्षिकादिके श्राद्धान्नशेषेणैव कार्यम् ।

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथातिथीन् ।
ततस्तदन्नं भुञ्जीत सहभृत्यादिभिर्नरः ॥

इति हेमाद्रौ मार्कण्डेयपुराणे श्राद्धसमाप्तौ पृथक्पाकमनुक्त्वैव वैश्वदेवनित्यश्राद्धरूपनित्यक्रियायाः श्राद्धशेषान्नेनाभ्यनुज्ञापनात् ।

## अथ क्षयाहश्राद्धम् ।

हेमाद्रौ ब्रह्मपुराणे—

प्रतिसम्वत्सरं कार्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैवहि ॥ इति ।

भ्रातुरित्यत्राप्यपुत्रस्येत्यनुषञ्जनीयम् ।

माधवीये भविष्यपुराणप्रभासखण्डयोः--

मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् ।
मातुश्चैव वरारोहे ! वत्सरान्ते मृतेऽहनि ॥
नाहं तस्य महादेवि ! पूजां गृह्णामि नो हरिः ।
न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः ॥
तस्माद्यत्नेन कर्त्तव्यं वर्षे वर्षे मृतेऽहनि ॥ इति ।

तत्र क्षयाहनिरुक्तिरुक्ता--

हेमाद्रौ व्यासेन,

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तस्य तं विदुः ॥

अत्र मासशब्देन मृततिथेर्मृततिथिपर्यन्तं त्रिंशत्तिथ्यात्मकश्चान्द्रो मासो विवक्षितः । तथाच माधवीये—

सिद्धान्तशिरोमणौ,

---

(१) एतदारभ्य निश्चय इति पर्यन्तं पुस्तकान्तरे नास्ति ।

मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः ॥ इति।

मासश्चन्द्रमसः। स्वकलावृद्धिहानित इत्येकं पदम्। एवं प्रत्यब्दशब्देन षष्ठ्यधिकशतत्रयतिथ्यात्मकः संवत्सरोऽपि। एवं च सति यदाधिमासो भवेत्तदा प्रतिसाम्वत्सरिकश्राद्धं कथं कार्यमित्याकाङ्क्षायाम्--

माधवीये सत्यव्रतः,

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि।
मलमासे(१) न कर्त्तव्यं व्याघ्रस्य वचनं यथा ॥ इति।

लघुहारीतोऽपि,

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥ इति।

अत्र द्वादशे मासि पूर्णे सत्यनन्तरादिने कार्येति पूरणीयम्। मासपक्ष इत्यादिना श्राद्धदिनस्य व्यासेन विशेषितत्वात्। यदा हि शुद्धचैत्रे मृतस्य मैत्रस्यापरे वर्षे चैत्रे मलमासो भवेत्तदा तस्मिन्नेवाद्याब्दिकं कार्यम्।

आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मालिम्लुचे।

इति यमस्मरणात्।

"शुद्धमासमृतानां तु मले स्यात्प्रथमाब्दिकम्"।
"असङ्क्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं नरैः"।

इति वचनाभ्यां च। मलमासमृतानां तूत्तरे वर्षेऽधिकवैशाखशुक्लसप्तम्यां मृतानां वैशाखशुक्लसप्तम्यामधिकवैशाखकृष्णनवम्यां मृतानां ज्येष्ठकृष्णनवम्यां श्राद्धं कार्यम्।

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

---

(१) तु इति पुस्तकान्तरे पाठः।

इति गर्गोक्तेः। आब्दिके=वर्षवृद्ध्यादौ। पितृकार्ये= श्राद्धादौ। चान्द्रः=अमान्तः।

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रवियावत्कालं मासस्तु(१) भास्करः॥

इति माधवीये ब्रह्मसिद्धान्तात्। अथ यदा मलमासमृतस्य कालान्तरे पुनः कदाचित्स एव मलमासो भवेत्तदा मलमास एव प्रत्याब्दिकं कार्यम्।

मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरम्।
मलमासे तु तत्कार्यं नान्येषां तु कदाचनः॥

इति माधवीये भृगूक्तेः।

वर्षे वर्षे तु यच्छ्राद्धं मृताहे तु मलिम्लुचे।
कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु॥

इति सत्यपादवाक्याच्च। यत्तु--

मलमासे मृतानां तु सौरं मानं समाश्रयेत्।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु॥

इति हेमाद्रिधृतव्यासवचनं, तदेतत्परमेवेति विवेचनसिन्धुश्रीमयूखकाराः। अथ कार्त्तिकादिक्षयमासे कार्त्तिकमार्गशीर्षयोः प्रतिसांवत्सरिकमेकदिन एव कार्यम्।

एक एव यदा मासः सङ्क्रान्तिद्वयसंयुतः।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते॥

इति मदनरत्नलिखितसत्यव्रतवचनात्। मलमासे= क्षयमास इत्यर्थः। इत्यस्तु सङ्क्षेपतः प्रसङ्गागतम्। अथ प्रकृतमनुसरामः।

शातातपः--

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा।
प्रतिसम्वत्सरं श्राद्धं छागलेयोदितो विधिः॥ इति।

(१) मासः स इति पुस्तकान्तरे पाठः।

यमः—

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥

अत्र पार्वणैकोद्दिष्टयोः समबलत्वाद्व्रीहियवाद्विकल्पः । स-चाचाराद्व्यवस्थित इति सर्वनिबन्धकारसम्मतः । अत एव दाक्षिणात्याः पार्वणं कुर्वते मैथिलादयोऽन्ये एकोद्दिष्टमिति । ये एकोद्दिष्टं कुर्वन्ति तेषामपि क्वचित्पार्वणमेव ।

अमावास्या क्षयो यस्य प्रेतपक्षोऽथवा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन ॥

इति शाङ्खोक्तेः । वार्षिकादावपि—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

इति धौम्यवाक्येन प्राप्तानां मातामहानां व्यावृत्तिं कुरुते—

कात्यायनः,

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडितिस्थितिः॥इति ।

कर्षूसमन्वितम्=सपिण्डीकरणम् । सन्न्यासिनां त्वाब्दिकेऽप्येकोद्दिष्टं न कार्यम् ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ॥

इति प्रचेतोवचनात् । अत्र त्रिदण्डग्रहणमेकदण्डस्याप्युपलक्षणम् ।

चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः ॥

इति चतुर्विंशतिमतात् । साम्वत्सरिकं प्रकृत्य—

कात्यायनः,

सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥
मातॄणां सपत्नमातॄणाम् ।

निर्णयामृते वृद्धगार्ग्यः--

मातुः सहोदरो यश्च पितुः सहभवश्च यः ।
तयोश्चैव न कुर्वीत पार्वणं पिण्डनादृते ॥

पिण्डनात्=सपिण्डीकरणात् । श्राद्धदीपकलिकायां चतुर्विंशतिमते विशेषः ।

(१)पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् ।
एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः ॥ इति ।

दाक्षिणात्यास्त्वेवमेवाचरन्ति ।

अत्रिः—

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् । इति ।

यत्र यत्र=कारुण्याद्वर्षश्राद्धे वचनात्तीर्थगयामहालयेष्वित्यर्थः । यत्तु प्रयोगपारिजातकारेण वार्षिके पितृव्यादीनां पार्वणमेव कार्यं नैकोद्दिष्टमित्युक्तं तत् प्रकरणविरोधाद्धेमाद्र्यादिसर्वग्रन्थासम्मतत्वाच्चोपेक्ष्यम् ।

कार्ष्णाजिनिः--

अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥ इति ।

सधवाक्षयाहे विशेषः स्मृत्यन्तरे—

भर्त्तुरग्रे मृता नारी सह वा तेन या मृता ।
तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ॥ इति ।

---

(१) भ्रातृव्येति द्वि० पु० पा ।

(१)अथाशक्तस्य सङ्कल्पश्राद्धमाह—

**हेमाद्रौ सम्वर्त्तः,**

समग्रं यश्च शक्नोति कर्त्तुं नैवेह पार्वणम् ।
अपि सङ्कल्पविधिना काले तस्य विधीयते ॥
पात्रे भोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते ।
तत्प्रयुक्तो विधिर्यस्तु स तेन व्यपादिश्यते ॥
तावन्मात्रेण सम्बन्धं श्राद्धं साङ्कल्पमुच्यते ।
प्रतिज्ञासनपूजान्नसङ्कल्पाक्षय्यदक्षिणाः ॥ इति ।

तद्विधिरपि पराशरोक्तोऽन्यत्र द्रष्टव्यः । अत्र यन्निषिद्धं तदाह—

**व्यासः,**

साङ्कल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनं नाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥

पात्रपूरणमर्घ्यस्य ।

**वसिष्ठः—**

आवाहनं स्वधाशब्दं पिण्डाग्नौकरणं तथा ।
विकिरं पिण्डदानं च साङ्कल्पे षड्विवर्जयेत् ॥

पिण्ड=उच्छिष्टपिण्डः ।

---

(१) अत्र–अत्रेदं विचार्यते–अन्यत्र पतिना सहेति वाक्यशेषाद्दर्शादौ सपत्नीकानां देवतात्वमुत केवलानामिति । तत्र केवलानामिति प्राञ्चः । हेमाद्रिस्तन्नानुमन्यते । अन्यत्र पतिना सहेतिवचनात्सपत्नीकानामेव देवतात्वमभिजानाति । न च सभर्तृकायै मात्रे इति प्रयोगप्रसङ्गः । प्रतीयमानस्यापि पत्नीप्राधान्यस्यात्राविवक्षितत्वात् । पतिसहत्वस्य प्राधान्यस्य च विवक्षणे गौरवं स्यात् । प्राप्ते कर्मणि गुणद्वयविधानस्याशक्यत्वात् । तदाहुः—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति । इत्यधिकं पुस्तकान्तरे ।

व्याघ्रः—

अङ्गानि पितृयज्ञस्य यदा कर्त्तुं न शक्नुयात् ।
स तदा वाचयेद्विप्रान्सङ्कल्पात्सिद्धिरस्त्विति ॥

साङ्कल्पश्राद्धे निमित्तान्तरमप्याह—

छागलेयः,

पिण्डो यत्र निवर्त्तेत मघादिषु कथञ्चन ।
साङ्कल्पं तु तदा कार्यं नियमाद्ब्रह्मवादिभिः ॥ इति ।

अन्यान्यपि श्राद्धान्येकोद्दिष्टव्यतिरिक्तानि नित्यानि नैमित्तिकानि काम्यानि च दर्शश्राद्धविधिना कर्त्तव्यानि । अत एवोक्तं मदनरत्ने-

ब्रह्माण्डपुराणे,

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवच्छ्राद्धमेकोद्दिष्टं त्यजेद्बुधः ॥

पार्वणवद्दर्शवदित्यर्थः । अथ पार्वणैकोद्दिष्टयोः कालमाह-

हारीतः,

आमश्राद्धं तु पूर्वाह्णेऽपराह्णे पार्वणं भवेत् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ इति ।

अत्र दिवसस्य पञ्चधा विभागो ज्ञेयः । प्रातःसङ्गवमध्याह्नापराह्णसायाह्न भेदात् । अत्र पूर्वाह्णशब्देन मध्याह्नपूर्वभावी सङ्गवो ग्राह्यः । प्रातर्व्यपदेशादत्रापि प्रातःकालनिषेधप्रवृत्तौ बाधकाभावात् ।

कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्ता तु या तिथिः ।
आमश्राद्धं तत्र कुर्याद्द्विमुहूर्त्तापि वा भवेत् ॥

इति व्याघ्रपादवचनात् । एतच्च द्विजकर्तृकानित्यामश्राद्धविषयम् । शूद्रकर्तृकनित्यामश्राद्धं त्वपराह्णे कार्यम् ।

मध्याह्नात्परतो यस्तु कुतुपः समुदाहृतः ।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् ।

इति निर्णयामृतात्। पार्वणमपराह्णे दिनचतुर्थभागे त्रिमुहूर्त्तमध्ये प्रारभ्य समापयेत् असम्भवे प्रारम्भं समाप्तिं वा तत्र कुर्यादिति स्मृत्यर्थसारे। एवमेकोद्दिष्टं तृतीयभागे मध्याह्ने कार्यम्। तत्रापि कुतुपमुहूर्त्तमारभ्यारौहिणमेकोद्दिष्टं कार्यम्।

कुतुपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्॥

इति व्यासोक्तेः।

प्रारभ्य कुतुपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥

इतिश्लोकगौतमोक्तेश्च। इतरथा--

ऊर्ध्वं मुहूर्त्तात्कुतुपाद्यन्मुहूर्त्तचतुष्टयम्।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते॥

इत्यादिवचोऽसङ्गतं स्यात्। कुतुपोऽष्टमो रौहिणो नवमो मुहूर्तः। अत्रैव प्रसङ्गादहोरात्रयोस्त्रिशन्मुहूर्तनामानि प्रोच्यन्ते। माधवीये पुराणे—

रौद्रश्चैत्रश्च मैत्रश्च तथा सारभटः स्मृतः।
सावित्रो वैश्वदेवश्च गान्धर्वः कुतुपस्तथा॥
रौहिणस्तिलकश्चैव विभवो निर्ऋतिस्तथा।
शम्बरो विजयश्चैव भेदः पञ्चदशः स्मृतः॥

इति दिवामुहूर्त्ताः। अथ रात्रेः।

शङ्करश्चाजपादश्च तथाहिर्बुध्न्यमैत्रकौ।
आश्विनो याम्यवाह्नेयौ वैधात्रश्चान्द्र एव च॥
आदितेयो जयश्चैव वैष्णवः सौर एव वा।
ब्राह्मो नाभस्वतश्चैव मुहूर्त्ताः क्रमतो निशि॥

इति रात्रिमुहूर्त्ताः। यत्तु नारदवचः-

मध्येऽन्हस्त्रिमुहूर्त्तं तु यदा चलति भास्करः।
स कालः कुतुपो नाम पितॄणां दत्तमक्षयम्॥ इति,

तन्मुख्यकालेऽजातस्यैकोदिष्टस्य गौणकालतापरमिति युक्तम्। दिनद्वये मध्याह्नादिसत्त्वेऽसत्त्वे वा निर्णयो दर्शितस्तिथ्यर्के। कर्माङ्गं वृद्धिश्राद्धं तु प्रातराद्यत्रिमुहूर्त्ते कार्यम्। अग्न्याधानाङ्गकं वृद्धिश्राद्धं त्वपराह्णे कार्यम्।

पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथाग्निकम्।

इति गालववचनात्। पुत्रजन्मादिनिमित्तकं तु निमित्तानन्तरं रात्र्यादावपि कार्यम्।

पूर्वाह्णे तु भवेद्वृद्धिर्विना जन्मनिमित्तकम्।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः॥

इत्यत्रिवचनात्। हेमश्राद्धस्यामश्राद्धसाधर्म्यात्सङ्गवेऽनुष्ठानं बोध्यमितिदिक्।

## अथ महालयः।

बृहन्मनुः—

नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः।
स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा॥ इति।

तत्रादौ प्रोष्ठपदीश्राद्धमुक्तं हेमाद्रौ-

ब्रह्मपुराणे,

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ।
पौर्णमास्यां तु कर्त्तव्यं वराहवचनं तथा॥
पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्त्तिताः॥
तेभ्यः परतरे ये तु ते तु नान्दीमुखाः स्मृताः। इति।

यस्मिन्दर्शान्तमासे सूर्यः कन्यां गच्छति तन्मासपौर्णमास्यां भाद्रपद्यामित्यर्थः। प्रत्यब्दमिति वीप्सयावश्यकता द्योत्यते। अत्र केचित्--

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।

इति धौम्यवाक्येन मातामहपार्वणमपि प्रौष्ठपदी श्राद्धे कार्यमित्याहुः । तन्न । धौम्यवाक्यगतपितृशब्दस्य पितृपितामहप्रपितामहपरस्य बहुवचनान्तस्य जनकादिपरत्वाविवक्षया सापिण्डीकरणान्तश्राद्धजन्यपितृभावापत्तिपरत्वे जीवत्पितृकस्य मातृनवमीप्रयुक्तान्वष्टक्यश्राद्धेऽपि मातामहाद्यापत्तिव्यावृत्त्यर्थं यत्र पितृदैवत्यं श्राद्धं तत्रैव मातामहादिश्राद्धविधिर्नान्यत्रेत्यस्यावश्यं वाच्यत्वात् । इष्टापत्तिपक्षे तु सन्न्यासिनां सपिण्डीकरणाभावेन तादृशपितृभावापत्त्यभावात्सन्न्यस्तपितुर्देवदत्तस्य दर्शश्राद्धेऽपि धौम्यवाक्यविषयानाक्रान्ततया मातामहादयो न स्युरित्यनिष्टापत्तिस्तस्मात्तत् । प्रकृते तु देवतान्तरयोगादाशङ्कापरिहारावप्युक्तवान्तवदुपेक्ष्यौ । व्यवस्थापितं चैवमेव प्रकारान्तरेण द्वैतनिर्णयेऽस्मान्मातुः पितामहचरणैः । तथा चेयं तेषां सिद्धान्तकारिकापि—

तस्मात्प्रौष्ठपदीश्राद्धे नेज्या मातामहादयः ।
इति साधितमस्माभिर्न्यायज्ञैयार्थवाक्यतः ॥ इति ।

अत्र अस्मन्नान्दीमुखानां महादेवगोविन्ददामोदरशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां धूरिलोचनसंज्ञकानां विश्वेषां देवानां चावश्यकं प्रौष्ठपदीश्राद्धं पार्वणविधिनान्नेन हविषा युष्मदनुज्ञया सद्यः करिष्ये । अस्मन्नान्दीमुखस्य महादेवशर्मणो वसुस्वरूपस्य स्थाने त्वामहं निमन्त्रये, अस्मन्नान्दीमुखस्य गोविन्दशर्मणो रुद्रस्वरूपस्य स्थाने० अस्मन्नान्दीमुखस्य दामोदरशर्मण आदित्यस्वरूपस्य स्थाने त्वामिति प्रयोगक्रमो ज्ञेयः । शेषं पार्वणश्राद्धवत् । अस्मिन् श्राद्धे धूरिलोचनौ देवौ कन्याराशिगतसूर्यसम्बन्धात् । एतच्चापुत्रविधवयापि कार्यम् । महालयश्राद्धवदत्रापि तस्याः प्रवृत्तौ बाधकाभावात् । श्राद्धाङ्गतर्पणं तु परेद्युः कार्यं विशेषवचनाभावात् ।

परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् ।
तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि ॥

इति बृहन्नारदीयवचने श्राद्धकृदिति साधरणनिर्देशादिसलं पल्लवितेन ।

## अथ प्रतिपदादिश्राद्धानि ।

ब्रह्मपुराणे--

आश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा ॥
न सन्ति पितरश्चेति मत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥
यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा ॥ इति ।

अत्र मदनरत्नः—तृतीयो भागस्त्रिभागस्तद्धीनः पक्षः पञ्चम्यादिपक्षस्तत्राद्याश्चतस्रस्तिथयश्चतुर्दशी चेति पञ्च हीयन्त इत्यतस्तस्य त्रिभागहीनता । एवं दशम्यादिपक्षस्य त्रिभागता अष्टम्यादिपक्षस्याप्यर्धता द्रष्टव्या । पञ्चम्यादिपक्षेषु चतुर्दशीवर्जनस्योक्तत्वात् ।

गौतमस्मृतावपि—तथापरपक्षे श्राद्धं पितृभ्यो दद्यात्पञ्चम्यादिदर्शान्तमष्टम्यादि दशम्यादि सर्वस्मिन्वा--

इत्याह । तदसत् । निदर्शितात्रिभागस्याप्रतीतिविषयत्वात् । नहि नवानां त्रिभागः, आद्यौ द्वौ सप्तमश्च प्रतीयन्ते किन्तु क्रमेणैव त्रयः तस्माद्वक्ष्यमाणः पन्थाः श्रेयान् । गौतमीयं तु कालविशेषानुपादानादपरपक्षान्तरविषयम् । त्रिभागमिति षष्ठ्यादिपक्षः, त्रिभागमित्येकादश्यादिपक्षः ।

पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽप्यति ।

इति विष्णुधर्मोक्तेः । अर्धमित्येकादश्यादिपक्षस्यार्धं त्र-

षोदश्यादीत्येके अर्धमिति चाष्टम्यादिपक्ष इत्यपरे ।

बृहन्मनुः,

आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।
तत्र श्राद्धं प्रकुर्वीत कन्यास्थार्को भवेन्न वा ॥

श्लोकगौतमः—

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि सम्पूर्णतरदक्षिणैः ॥ इति

शूलपाणिना तेषु दत्तमथाक्षयमिति चतुर्थश्चरणोऽलेखि ।

कार्ष्णाजिनिः—

आदौ मध्येऽवसाने वा यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति ॥

अत्र तिथिवृद्धौ षोडशत्वसम्पादनमिति माधवाचार्याः । प्रौष्ठपदीश्राद्धसाहित्येनेति हेमाद्रिः । शुक्लप्रतिपदा सहेति तु युक्तम् । तथाच--

देवलः,

अहःषोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता ॥ इति ।

अत्रेयं सरणिः । समर्थः पक्षपर्यन्तं, पक्षासामर्थ्ये षष्ठीमारभ्य, तदसामर्थ्येऽष्टमीमारभ्य, तदसामर्थ्ये एकादशीमारभ्य, तदसामर्थ्ये त्रयोदशीमारभ्य वा श्राद्धानि कुर्यात् । अत्र प्रतिपदमारभ्य षोडशदिनपर्यन्तं श्राद्धानुष्ठान एव चतुर्दशीवर्जनं नास्ति इतरेषु त्रिभागादिहीनपक्षेषु तद्वर्जनमस्त्येव ।

नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी । एकस्मि-

इति कार्ष्णाजिनिवचनात् । कालविशेष-

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीं तराण्यपि स-

इति मनूक्तेः। यत्तु याज्ञवल्कीयम्—

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।

इति, तत्कालविशेषानुपादानादितरसर्वापरपक्षश्राद्धविषयम्। अत्यसमर्थस्यैकादिन उक्तम्—

**हेमाद्रौ नागरखण्डे,**

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
तस्य सम्वत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम् । इति ।

यदैकस्मिन्दिने तदा मृततिथौ कार्यम् ।

या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ।
सा तिथिः पितृपक्षेऽपि पूजनीया प्रयत्नतः ॥

इतिनिर्णयदीपिकाकारधृतवचनात् । श्रीमातामहगुरवस्त्विदं निर्मूलमित्याहुः। विघ्नवशेन पक्षमध्ये श्राद्धं न जातं चेदग्रेऽपि कार्यमित्याह—

**सुमन्तुः,**

कन्याराशौ महाराज ! यावत्तिष्ठेद्विभावसुः ।
तस्मात्कालाद्भवेद्देयं वृश्चिकं यावदागतः ॥ इति ।

**भविष्ये—**

येयं दीपान्विता राजन् ख्याता पञ्चदशी शुभा ।
तस्यां देयं न चेद्दत्तं पितॄणां वै महालये ॥ इति ।

पञ्चदशी=अमा । गौडास्तु सकृन्महालयमत्रैव कुर्वन्ति । तत्र मूलं न विद्मः ।

## अथ महालये पिण्डदाननिषिद्धकालः ।

प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ॥ इति ।

प्राजापत्यं=रोहिणी पौष्णं=रेवती । पित्रर्क्षं=मघा ।

इति विष्णुः । पिण्डदानस्यैव निषेधनात् ।

नारदः—

कृत्तिकायां च नन्दायां भृगुवारे त्रिजन्मसु ।
पिण्डदानं न कर्त्तव्यं कुलक्षयकरं यतः ॥

नन्दाः=प्रतिपत्षष्ठ्येकादश्यः । त्रिजन्मानि=स्वजन्मनक्षत्रं ततो नवममेकोनविंशं चेति । जन्मर्क्षं तत्पूर्वोत्तरे चेति केचित् । जन्मनक्षत्रं जन्मदिनं जन्मतारा चेति मदनपारिजाते । प्राचां सङ्ग्रहश्लोकोऽपि—

नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।
गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

अश्वः=सप्तमी । कामस्त्रयोदशी । आरो=भौमः । अग्निपितृकालभानि=कृत्तिकामघाभरण्यः। शेषं स्पष्टम् । एवमन्येऽपि निषेधाः प्रयोगपरिजातादिषु द्रष्टव्याः । एतत्सर्वं सकृन्महालय एव विचारणीयम् ।

सकृन्महालये काम्ये पुनः श्राद्धेऽखिलेषु च ।
अतीतविषये चैवमेतत्सर्वं विचिन्तयेत् ॥

इति नारदवचनात् । यदा सकृन्महालयोऽमावास्यादौ क्रियते तदैतन्न विचारणीयम् ।

अमापाते भरण्यां च द्वादश्यां पक्षपक्षके ।
तिथिवारं च नक्षत्रं योगं च न विचारयेत् ॥

इति हेमाद्र्याद्युदाहृतसङ्ग्रहवचनात् । संन्यासिनां तु सकृन्महालयस्तु द्वादश्यामेव नान्यत्र ।

सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत् ॥

इति वायुपुराणवाक्यात् । अस्य च सकृत्पक्षत्वम् "एकस्मिन्नपि वासर" इत्यादिवचनप्राप्तसामान्यसकृत्त्वपक्षे कालविशेषनियममात्रकरणेन बोध्यं लाघवात् । एवञ्च पक्षान्तराण्यपि त-

न्यासिनां भवेयुः । अत्र पक्षश्राद्धे त्रीणि पार्वणानि कार्याणि।
तदुक्तम्—

**हेमाद्रौ मात्स्ये,**

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवत्यमत्रेष्टं शेषं षाट्पौरुषं विदुः ॥ इति ।

समर्थस्य तु द्वादशदैवत्यमुक्तं द्वैतनिर्णये निगमे,

ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे मघासु च । इति ।

अत्र पूर्वार्धे तदेव । इतरेषां पितृव्यादीनामेकोद्दिष्टमेव ।

उपाध्यायगुरुश्वश्रुपितृव्याचार्यमातुलाः ।
श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्प्रियपोषकाः ॥
भगिनीस्वामिदुहितृजामातृभगिनीसुताः ।
पितरः पितृपत्नीनां पितुर्मातुश्च या स्वसा ॥
सखिद्रव्यदशिष्याश्च तीर्थे चैव महालये ।
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः ।

इतिपुराणोक्तेः । विधवाया विशेषः—

**स्मृतिसङ्ग्रहे,**

चत्वारि पार्वणानीह विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानमुपक्रमेत् । इति ।

इह=महालये इत्यर्थः । दर्शेऽपि तस्या विशेषः स्मृति-
समुच्चये—

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥ इति ।
इदं च महालयश्राद्धमन्नेनैव कार्यम् नामादिना ।
मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥

इतिगालवोक्तेः । महालये भरणीश्राद्धं महाफलम् ।
भरणी पितृपक्षे तु महती परिकीर्त्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥

इति मात्स्यात् । अत्र नवम्यामष्टन्वकेत्युक्तं प्राक् । अस्यां मातृश्राद्धमतितरामावश्यकम् ।

सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ॥

इति स्मृतेः । सर्वासामिति कथनात्सपत्नमातुरपि कार्यम् । इदं जीवत्पितृकेणापि मृतमातृकेण कार्यम् ॥

अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इति मैत्रायणीयपरिशिष्टात् । अन्वष्टक्यं=महालयान्तर्गतनवम्यां कर्त्तव्यत्वेन बोधितं मातृश्राद्धं न तु "अपरेद्युरन्वष्टक्यम्" इत्याश्वलायनाद्युक्तम् । तस्य जीवत्पितृकस्य निषेधदर्शनात् । शूद्रानुपेतयोरप्यत्राधिकाराच्च । मातृद्वित्वे बहुत्वे वा श्राद्धप्रकारमाह—

गालवः,

अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥

द्वयोर्बह्वीनां च नामैक्ये द्विवचनबहुवचनान्तं चेति । अदः श्राद्धं सधवाया एव मातुर्मरणे कार्यमिति केचित् । तत्तुच्छम् । वचनात्तादृशार्थप्रतीत्यभावात् । युक्तं तु विधवाया अपीति । यत्तु पठन्ति—

श्राद्धं नवम्यां कुर्यात्तु मृते भर्तरि लुप्यते ।

इति वचस्तत्राकरश्चिन्त्यः । अथात्रैव त्रयोदशीश्राद्धम् ।

मनुः,

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।

तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥ इति ।

याज्ञवल्क्यः—

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।

तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ इति ।

विष्णुधर्मोत्तरे—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।

प्राप्य श्राद्धं प्रकर्त्तव्यं मधुना पायसेन वा ॥

अत्र यद्यपि वचनेषु मघायुतैव त्रयोदशी श्राद्धकालत्वेन प्रतीयते तथापि--

प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ।

इत्यादिमघापदरहितवचनेभ्यः केवलापि तथा भवति द्वयोर्योगे तु फलाधिक्यमात्रम् । तथाच --

स्मृतिचन्द्रिकायां स्मृत्यन्तरे,

त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया ।

तृप्यन्ति पितरस्तस्यां स्वयं पञ्चशतं समाः ॥

मघायुतायां तस्यां तु जलौघैरपि तोषिताः ।

तृप्यन्ति पितरस्तद्वद्वर्षाणामयुतायुतम् ॥ इति ।

अपीत्यनुकल्पः । एतेन मघायुतैव त्रयोदशी श्राद्धकालो न शुद्धा त्रयोदशी नापि केवलं मघेति शूलपाणिव्याख्यानमपास्तम् । आश्विनेऽधिमासे सति मघात्रयोदशीयोगोऽधिमासि चेद्भवेत्तदा तत्रापि श्राद्धं कार्यम् ।

मघात्रयोदशीश्राद्धं प्रत्युपस्थितिहेतुकम् ।

अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

इति काठकगृह्यात् । मघाश्राद्धमविभक्ता अपि पृथक् कुर्युः ।

विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक् पृथक् ।

मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना ॥

इति हेमाद्रौ स्मृतेः । मघायुतत्रयोदश्यां ससन्तानेन पुंसा सपिण्डकं श्राद्धं न कार्यम् ।

मघायुक्तत्रयोदश्यां पिण्डानिर्वपणं द्विजः ।
ससन्तानो नैव कुर्यान्नित्यं ते कवयो विदुः ॥

इतिबृहत्पराशरवचनात् । अस्मिंस्त्रयोदशीश्राद्धे "पितरो यत्र पूज्यन्ते" इतिधौम्यवाक्यान्मातामहपार्वणमपि कार्यम् ।

कार्ष्णाजिनिरपि—

श्राद्धं न चैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ॥

तेऽग्रजामित्यपि क्वचित्पाठः । अत्र हेमाद्रिर्धौम्यवाक्येन मातामहप्राप्तौ सत्यामपि अयं निषेधो भ्रमप्राप्तैकपार्वणस्येत्याह । अन्ये तु जीवन्मातामहवर्गकस्यैकवर्गयजनप्राप्तेरयं निषेध इत्यूचुः । अभिमातामहास्तु येषां सूत्रे मातामहा नाम्नातास्तान्प्रति सामान्यतः प्राप्तस्यैकपार्वणस्य निषेधार्थमित्याहुः । मया तूच्यते पराशरमाधवे स्मृत्यन्तरे—

इच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषोः ।
एकस्यैव तु नो दद्यात्पार्वणं तु समाचरेत् ॥ इति ।

अस्यायमर्थः । यः पुत्रवान्सुतायुषोरभिवृद्धिमिच्छेत्स एकस्यैव त्रयोदशीश्राद्धं नो दद्यात्किन्तु पार्वणं श्राद्धं समाचरेत् । पर्वणि भवं पार्वणं षड्दैवत्यमित्यर्थः । अनेन वचनेन सुतायुषोरभिवृद्धिकामनापक्षे एकपार्वणप्राप्तेरयं निषेध इति ।

## अथ चतुर्दशीश्राद्धम् ।

हेमाद्रौ याज्ञवल्क्यः—

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥

ब्रह्मपुराणे—

प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा ।
चतुर्दश्यां भवेच्छ्राद्धं तृप्त्यर्थमिति निश्चयः ॥ इति ।

प्रायो=महापथगमनम् ।

मरीचिः—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ॥ इति ।

ब्राह्मणाद्घातो यस्यासौ ब्राह्मणघाती तस्येत्यर्थः । "ये च वै ब्राह्मणैर्हता" इति ब्रह्मपुराणात् । क्रिया=श्राद्धम् । अन्येषामशस्त्रादिहतानाम् ।

हेमाद्रौ नागरखण्डे—

अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
उपसर्गमृतानां च विषमृत्युमुपेयुषाम् ।
वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम् ॥
सर्पव्याघ्रहतानां च शृङ्गैरुद्बन्धनैरपि ।
श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप ! ॥ इति ।

मार्कण्डेयपुराणे—

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सुना ॥ इति ।

प्रचेताः—

वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ॥ इति ।

एवञ्च सति पतिमरणनिमित्तं वह्नौ प्रविष्टस्त्रीणामसाध्यव्याध्यभिभूतानां च भृग्वग्न्यम्बुभिर्मृतानामिह श्राद्धं न भवति । प्रायोऽनशनाभ्यां मृतानां तादृशानामपि भवत्येव पूर्वोक्तवचनात् । इदं चैकोद्दिष्टमेव कार्यं न पार्वणम् ।

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम् ।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः ॥

इति गार्ग्यवचनात् ।

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये ॥

इति सुमन्तूक्तेश्च । समत्वमागतस्य=सपिण्डीकरणेन पितृत्वं प्राप्तस्य । एतेनेदं श्राद्धं पार्वणविधिना कार्यमिति शूलपाणिव्याख्या निरस्ता । पित्रादित्रिके द्वयोः शस्त्रादिमृतावेकोद्दिष्टद्वितयं कार्यम् । "एकस्मिन्द्वयोर्वैकोद्दिष्टविधिः" इति पराशरमाधवलिखितस्मृतेः । त्रयाणामपि तथात्वे एकोद्दिष्टत्रयं कार्यमित्याहुर्माधवदेवस्वामिविवेचनकारप्रभृतयो भूयांसः । हेमाद्र्यपरार्कस्मृतिचन्द्रिकाकारश्रीमातामहादयो बहवो निबन्धकारास्त्रयाणां तथात्वे पार्वणमेवेत्याहुः। युक्तं चैतत् ।

चतुर्दश्यां च यच्छ्राद्धं सपिण्डीकरणे कृते ।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रघातिनाम् ॥
पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात् ।
स भूते पार्वणं कुर्यादाब्दिकानि पृथक्पृथक् ॥

इति मदनरत्ने पराशरस्मृतेः । एतेन माधवादयः परास्ताः । इदं च श्राद्धं सदैवं कार्यमित्युक्तं स्मृत्यर्थसारप्रयोगपारिजातयोः ।

प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ।
दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् ॥
तच्छ्राद्धं दैवहीनं चेत्पुत्रदारधनक्षयः । इति ।
महालयश्राद्धमधिमासे न कार्यम् ।
वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ॥

इति भृगूक्तेः।

नभो वाथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

इति नागरखण्डाच्च। अत्र पञ्चमत्वसप्तमत्वे आषाढीतो बोध्ये। आश्विनशुक्लप्रतिपदि दौहित्रो मातामहश्राद्धं कुर्वीतेत्युक्तं हेमाद्रौ स्मृतौ—

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥ इति।

इदं श्राद्धमनुपनीतोऽपि कुर्यात् अपिपदस्वारस्यात्। शिष्टाचारोऽप्येवमेव। इदं च जीवत्पितृक एव करोति तत्र मूलं न जानीमः। श्राद्धे पिण्डदानावश्यकतयैतच्च सपिण्डकमेव कार्यमिति सङ्क्षेपः।

इति श्रीभारद्वाजमहादेवभट्टात्मजदिवाकरविरचितायां
श्राद्धचन्द्रिकायां महालयश्राद्धानि।

---

## अथैकोद्दिष्टम्।

तत्स्वरूपमुक्तं कण्वेन,

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्त्तितम्। इति।

तदितिकर्त्तव्यतोक्ता याज्ञवल्क्येन,

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम्।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्मह ॥ इति।

आश्वलायनानां त्वेकोद्दिष्टेऽप्यग्नौकरणादयः पदार्था भवन्त्येव। तद्गृह्यसूत्रे चतुर्थाध्याये "अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ब्राह्मणा" इति चत्वारि श्राद्धा-

न्युपक्रम्य चतुर्व्वेष्यग्नौकरणादीनां साम्यतोक्तेः । तत्त्रिविधं नवनवमिश्रपुराणभेदात् ।

तथाचाश्वलायनः—

नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून् ।
अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते ॥ इति ।

श्राद्धमेकोद्दिष्टम् । तत्र नवश्राद्धान्युक्तानि—

वृद्धवशिष्ठेन,

प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् सदा ॥ इति ।

ब्रह्माण्डपुराणे—

नवश्राद्धानि कुर्व्वीत प्रेतोद्देशेन यत्नतः ।
एकोद्दिष्टविधानेन नान्यथा तु कदाचन ॥ इति ।

नवमिश्राण्याह—

आश्वलायनः, नवमिश्रं षडुत्तरमिति ।

षण्णां नवश्राद्धानामुत्तरं क्रियमाणानि षोडशश्राद्धानि नवमिश्राणीत्यर्थः । तान्याह हेमाद्रौ—

जातूकर्ण्यः,

द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥

आद्यमूनमासिकम् । षाण्मासिकमूनषाण्मासिकम् । एवमाब्दिकपदेनोनाब्दिकं ज्ञेयम् । द्वादशानामपि पृथगुपादानात् । एतेषां कालमाह—

याज्ञवल्क्यः,

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसम्वत्सरं चैवमाद्यमेकादशेऽहनि ॥

आद्यमासिकं मृततिथौ प्राप्तं तदेकादशेऽह्नि कार्यमित्यर्थः ।

लौगाक्षिरपि—

मासादौ मासिकं प्रोक्तमाब्दिकं वत्सरे गते ।
आद्यमेकादशे कार्यमधिके त्वधिकं भवेत् ॥ इति ।

ननु शुचिना कर्म कर्तव्यमितिविधानादाशौचाविमुक्तानां क्षत्रियादीनामेकादशेऽह्नि कथं श्राद्धाधिकार इति चेत्, न ।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥
एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
सर्वेषामेव वर्णानां सूतकं तु पृथक्पृथक् ॥

(१)इति शङ्खपैठीनसिवचनाभ्यां कर्त्तुस्तात्कालिकशुद्धेरभिधानात् । एवं ब्राह्मणानामपि पित्राशौचमध्ये द्वितीयादिदिने पुत्रस्य मातृमरणप्रयुक्ताधिकपक्षिण्याशौचे तथा दशमादिनरात्रिरात्र्यन्त्ययामादिष्वाशौचान्तरपातेन मासद्व्यहत्र्यहाद्याशौचे सत्यपि भवत्याद्यं श्राद्धम् । एवं वृषोत्सर्गशय्यादानाद्यपि भवत्येव ।

सूतके मृतके चैव द्वितीयं मृतकं यदि ।
पिण्डदानं प्रकुर्वीत वृषोत्सर्गं तथैव च ॥
न हन्यात्सूतकं कर्म द्वादशैकादशाहिकम् ।
शुद्धो वा यदि वाशुद्धः कुर्यादेवाविचारयन् ॥

इति स्मृत्यन्तरात् । मदनरत्नदेवयाज्ञिकादयोऽप्येवम् । द्वादशाहिकमिति तु पददानाभिप्रायेण न तु सपिण्डीकरणाभिप्रायेण । पददानस्य द्वादशाहे विशेषतोऽभिधानात्(२) ।

---

(१) अत्र—इति हेमाद्रिविज्ञानेश्वरधृतवचनाभ्यामशुद्धौ सत्यामपि प्रवृत्तिसम्भवात् इति द्वि० पु० पा० ।

(२) अतः परम्—

दैवे पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते ॥

इति ऋष्यशृङ्गेणाशौचव्यपगमे पितृश्राद्धमात्रस्यापादितत्वात् ।

एतस्य गौणकालोऽप्युक्तो--

बौधायनेन,

एकोद्दिष्टं श्व एव स्याद्द्वादशेऽहनि वा पुनः ।
अत ऊर्ध्वमयुग्मेषु कुर्वीताहःसु शक्तितः ॥
अर्धमासेऽथ वा मासे ऋतौ सम्वत्सरेऽपि वा । इति ।

उशना--

त्र्यहाशौचेऽपि कर्त्तव्यमाद्यमेकादशेऽहनि ।
अतीतविषये सद्यस्त्र्यहोर्ध्वं वा तदिष्यते ॥ इति ।

अत्रेदमवधेयम् । विप्राणां दशमेऽह्नि गात्रपूरकदशपिण्डसमाप्तौ वरमेकादशेऽहन्याद्यं श्राद्धम् । राजन्यादीनां तु--

राज्ञस्तु दशमः पिण्डो द्वादशेऽहनि दीयते ।
वैश्यस्य पञ्चदशमे ज्ञेयस्तु दशमस्तथा ॥
शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते ।

इत्यादित्यपुराणाद्दशमदिने तादृशपिण्डासमाप्तावयोग्यमेकादशेऽह्नि आद्यं श्राद्धमिति प्रतिभाति यद्यपि, तथापि वचनाद्गात्रपूरकपिण्डसमाप्तेः पूर्वमपि भवत्वाद्यं श्राद्धं नास्माकं तत्र काचित्क्षतिरिति । अत्र मध्ये मलमासे सति मले यन्मासिकं पतेत्तदावर्त्तनीयम् । "संवत्सरमध्ये यद्यधिमासो भवेन्मासिकार्थं दिनमेकं वृद्धिं नयेत्" इति वसिष्ठवाक्यात् ।

श्राद्धीयेऽहनि सम्प्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति ॥

इति वृद्धवसिष्ठवाक्याच्च । श्राद्धीयेऽहनि=मासिकश्रा-

---

सपिण्डीकरणस्यापि पितृश्राद्धत्वात् । एवं च द्वितीयाद्यहोरात्रे सहगमने सपिण्डीकरणमाशौचान्ते कार्यम् ।

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम् ।

इति कात्यायनोक्तेः । आशौचान्त्यदिनोत्तरदिने इत्यर्थः । तत्रापि प्रतिबन्धान्तरेणान्तरिते तु त्रिपक्षादिषूत्तरकालेषु ज्ञेयम् । इत्यधिकं पुस्तकान्तरे ।

द्वीयेऽहनि । श्राद्धद्वयं प्रकुर्वीत आदावेकं मले कार्यं तदेव पुनः शुद्धमासेऽपि कार्यमित्यर्थः । ऊनमासिकादिकालमाह—

पराशरमाधवे गालवः,

ऊनषाण्मासिकं षष्ठे मासेऽर्धे न्यूनमासिकम् ।
त्रैपाक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा ॥ इति ।

कालान्तरमाह—

श्लोकगौतमः,

एकद्वित्रिदिनैरूनैस्त्रिभागेनोन एव वा ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥

अत्र सप्तम्यां मृतस्यैकाहन्यूनपक्षे पञ्चम्यां द्व्यहन्यूनपक्षे चतुर्थ्यां त्र्यहन्युनपक्षे तु तृतीयायामूनमासिकादि कार्यम् । षष्ठ्यां मासपूर्त्तेः । एवं च सति—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव स्यातां पूर्वेद्युरेव ते ॥

इत्यूनषाण्मासिकादिश्राद्धकालविधायकवचनं सङ्गच्छते । यत्तु हेमाद्रिपरिगृहीतं पैठीनसिवचनम्—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ॥ इति,

तन्मासससमाप्तेः पूर्वेद्युरित्येवंपरमुन्नेयम् । विवेचनकारास्तु एकाहन्यूनपक्षेऽस्मादेव वचनान्मृताहपूर्वतिथावेवोनमासिकादि कर्त्तव्यमित्यूचुः । ऊनमासिकस्य द्वादशाहेऽपि काल इत्याह—

गोभिलः,

मरणाद्द्वादशाहे स्यान्मासयूने वोनमासिकम् । इति ।

षोडशश्राद्धेष्वाहिताग्नेर्विशेषः—

छन्दोगपरिशिष्टे,

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।

ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥ इति ।

ध्रुवाणि त्रैपक्षिकादुत्तराणि तृतीयादिमासिकानि ।

जातूकर्ण्येऽपि—

ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
आद्यस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥ इति ।

तथा च त्रैपक्षिकपर्यन्तान्याहिताग्नेर्दाहदिनमारभ्यानाहिताग्नेर्मरणदिनमारभ्य श्राद्धानि कार्याणि, तदूर्ध्वानि तूभयोरपि मरणदिनादेवेति सिद्धम् । इदं च श्राद्धं विघ्नवशात्स्वकाले अन्तरितं चेदुत्तरेण सह कार्यम् ।

मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

इति कण्ववचनात् । सातन्त्र्यं=समानतन्त्रता ।

हेमाद्रौ स्मृत्यन्तरे—

आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् ।
पितृशब्दश्च सम्बन्धः शर्मशब्दस्तथैव च ॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणाविसर्गश्च सीमान्तगमनं तथा ।
अष्टादश पदार्थास्तु प्रेतश्राद्धे विवर्जयेत् ॥ इति ।

गृह्यपरिशिष्टेऽपि—

प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम् ॥

तथा—

अनुदकमधूपं च गन्धमाल्यविवर्जितम् ।
नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ॥

अनुदकमनर्घ्यम् । पिण्डोदकमवनेजनरूपं तेन शून्य-

मिति हेमाद्रिः ।(१)

अथोदकुम्भश्राद्धम् ।

हेमाद्रौ स्मृतिसमुच्चये—

एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्स्याद्वत्सरः सुतैः ॥ इति ।

एतच्च संवत्सरमकृते सपिण्डीकरणे एकोद्दिष्टविधिना कार्यम् । कृते तु सपिण्डीकरणे पार्वणविधिना कार्यम् । अत एव-

पद्मपुराणे,

उदकुम्भश्च दातव्यो भक्ष्यभोज्यसमन्वितः ।
यावद्वर्षं नरश्रेष्ठ ! सतिलोदकपूर्वकम् ॥
ततः संवत्सरे पूर्णे सपिण्डीकरणं भवेत् ।
सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभाग्भवेत् ॥ इति ।

संवत्सरादर्वागपि सपिण्डीकरणे कृते यावत्सांवत्सरिकं तावदिदं कार्यमेव ।

अर्वाक् सपिण्डीकरणं यस्य संवत्सरात्कृतम् ।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मनः ॥

इति याज्ञवल्क्योक्तेः । अस्मिंश्च श्राद्धे पिण्डदानं वैकल्पिकम् ।

अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात्पिण्डमेके निपृणन्ति ।

इति पारस्करवाक्यात् । पिण्डकरणपक्षे विशेषमाह मदनरत्ने—

गौतमः,

अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ।
कुर्यात्प्रत्याब्दिकश्राद्धात्सङ्कल्पविधिनान्वहम् ॥ इति ।

(१) सपिण्डीकरणात्प्राक्नैकोद्दिष्टश्राद्धविषयमेतत् इत्यधिकं पुस्तकान्तरे ।

अदैवं=देवा विश्वेदेवास्तत्सम्बन्धिकर्मरहितम् । अध-र्मकं=दातृभोक्तृनियमराहितम् । प्रत्याब्दिकश्राद्धात्सांवत्स-रिकश्राद्धपर्यन्तम् । सङ्कल्पविधिनेत्यनेनावाहनाद्यर्यादिनिवृत्तिः प्रतीयते । अन्वहं सोदकुम्भान्नदानाशक्तैनैकस्मिन्नेव दिने आ-मान्नेन तन्निष्क्रयेण वा कार्यम् ।

अन्नं चैव स्वशक्त्या तु सङ्कल्प्यां कृत्वाब्दिकस्य तु ।
दातव्यं ब्राह्मणेभ्यस्तु यद्वा तन्निष्क्रयं च यत् ॥

इति स्कान्दात् । अत्र चकारेणोदकुम्भपरामर्शः ।

## अथामश्राद्धम् ।

तन्निमित्तान्याह—कात्यायनः,

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्वीत भार्यारजसि सङ्क्रमे ॥

अत्रानग्नाविति भावप्रधानो निर्देशः । अनग्नित्व इत्यर्थः । निमित्तान्तरमाह—

मरीचिः,

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते ॥

मासो=मासिकम् । संवत्सरः=सांवत्सरिकम् । ग्रहणे भोक्तुरसम्भवे प्रत्याब्दिकमप्यामान्नादिना कार्यम् । भोक्तृस-म्भवे तु पक्वान्नेनैव कार्यम् ।

तथा च गोभिलः,

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ॥ इति ।

पित्रोरिदमुपलक्षणम् । तेनान्यस्यापि भवति । रविग्रह इति चन्द्रग्रहणस्याप्युपलक्षणम् ।

वृद्धप्रचेताः,

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।

आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैवहि ॥ इति ।

कौर्मे--

अनग्निरधनो वापि तथैव व्यसनान्वितः ।

आमश्राद्धं द्विजः कुर्याद्वृषलस्तु सदैव हि ॥ इति ।

व्यसनं=दुःखम् । इदं चामश्राद्धं सिद्धान्नासम्भवे द्विजैः कार्यम् । तथा च मदनरत्ने—

सुमन्तुः,

पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ! ।

आपन्नानां महाबाहो ! विदेशगमनादिभिः ॥

सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ॥ इति ।

आमस्वरूपमाह वसिष्ठः—

सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।

आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥ इति ।

आमपरिमाणमितिकर्त्तव्यतां चाह हेमाद्रौ व्यासः--

आमं ददाद्धि कौन्तेय ! दद्यादन्नं चतुर्गुणम् ।

सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥

आवाहनादि सर्वं स्यात्पिडदानं च भारत ! ।

दद्याद्यच्च द्विजातिभ्यः भृतं वाशृतमेव वा ॥

तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ।

धर्मोऽपि—

आमं तु द्विगुणं प्रोक्तं हेमं तद्वच्चतुर्गुणम् । इति ।

स्मृत्यर्थसारे तु सममप्युक्तम्—

आमं चतुर्गुणं द्विगुणं समं वा सोपस्करं त्यक्त्वा दक्षिणां दत्त्वा समापयेत् । इति ।

एतत् द्विगुणादिदानासमर्थं प्रति । अत एव-

वराहपुराणे,

असमर्थोऽन्नदानस्य धान्यमात्रं स्वशक्तितः ।

प्रदद्यात्तु द्विजातिभ्यः स्वल्पाल्पामपि दक्षिणाम् ॥ इति ।
स्वशक्तित इत्यनेन द्विजपर्याप्तं सम्यं लक्ष्यते । षट्त्रिंशन्मते पिण्डदाने पक्षान्तरमुक्तम्—

आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥
पिण्डान्दद्याद्यथालाभं तिलैः सह विमत्सरः । इति ।

प्रधानभूताद्गृहपक्वादोदनादुद्धृतेन तदेकदेशेनेति साधनान्तरविधिः । स च पिण्डदानग्रहणात्तत्रैव भवति । अग्नौकरणविकिरादौ त्वाममेव ।

आमश्राद्धप्रदः पिण्डांस्तथाग्नौकरणं च यत् ।
तद्दद्यात्तत्र तेनैव यत्किञ्चिच्चाधिकं भवेत् ॥

इति प्रचेतोवचनात् ।

व्यासः—

आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥ इति ।

एतदग्निमत एव । निरग्नेः सदा तत्सत्त्वात् । आमश्राद्धे चावगाहापोशानप्राणाहुतिजुषप्रश्नतृप्तिप्रश्नादिकम्—

आमश्राद्धे हिरण्ये च नास्ति ब्राह्मणभोजनम् ।
तदङ्गानि निवर्त्तन्ते श्राद्धसिद्धिश्च जायते ॥

इति वचनाल्लुप्यते । अत्र यद्यपि "ऋचं नोहेत्" इति ऋगूहो निषिद्धस्तथापि केषु चिन्मन्त्रेषूहमाह—

मरीचिः,

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ॥ इति ।

आवाहने "पितॄन्हविषे अत्तवे" इत्यत्र स्वीकर्त्तव इत्यूहः । विसर्जने तन्मन्त्रे "तृप्ता यात" इत्यत्र तर्प्स्यतेति । स्वधा पितृभ्य-

विदानं तत्करणं च स्वधाकारस्तदङ्गं मन्त्र इदमन्नमित्यादिस्तत्रै-कब्राह्मणभोजनपर्याप्तान्ननिष्पादनसमर्थधान्यचतुर्गुणमिदमाममित्यादिरूपेणोहः कार्य इति स्वधाकार इत्यस्यार्थः ।

धर्मप्रदीपे,

आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च ।
व्यतीपातादिके श्राद्धे नियमान्परिवर्जयेत् ॥ इति ।

नियमान्=ब्रह्मचर्यादीनित्यर्थः ।

अथ हेमश्राद्धम् ।

तन्निमित्तमाह—हेमाद्रौ संवर्तः,

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्केन न चामेन कल्याणान्यभिकामयन् ॥

मरीचिः—

आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् ।
धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा ॥ इति ।

बौधायनः,

सङ्क्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं सङ्ग्रहे च द्विजः शूद्रः सदाचरेत् ॥ इति ।

हेमात्र चतुर्गुणं देयं पूर्वोक्तवाक्यात् । स्मृत्यर्थसारे तु अ-ष्टगुणं चतुर्गुणं द्विगुणं समं चोक्तम्—

हिरण्यमष्टगुणं चतुर्गुणं द्विगुणं समं वा सदक्षिणं त्यक्त्वा पूर्ववत्समापयेत् । इति ।

एतेषां पक्षाणां शक्ताशक्तभेदेन व्यवस्था । अत्रापि पिण्ड-दानं कार्यम् ।

गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डदानं प्रकुर्वीत हेमश्राद्धे कृते सति ॥

इति भविष्योत्तरात् । शूद्रैरप्यामादिश्राद्धे शृतान्नपिण्डाः कार्या

इत्युक्तं हेमाद्रौ—

भविष्योत्तरे,

शूद्रस्तु गृहपाकेन तत्पिण्डान्निर्वपेत्तथा ।
सक्तुमूलफलं तस्य पायसं वा भवेत्स्मृतम् ॥ इति ।

कलौ युगे तु शूद्राः सक्तुपिण्डानेव कुर्वन्ति आचारात् । ब्राह्मणेन ब्राह्मणलब्धमामादि भोक्तव्यं न तु कार्यान्तरे व्ययितव्यम् ।

हिरण्यमामं श्राद्धीयं लब्धं तत्क्षत्रियादितः ।
यथेष्टं विनियोज्यं स्याद्भुञ्जीयाद्ब्राह्मणात्स्वयम् ॥ (१)

इति व्यासोक्तेरितिदिक् ।

## अथ श्राद्धे निषिद्धकालः ।

मनुः—

रात्रौ श्राद्धं न कर्त्तव्यं राक्षसी कीर्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥ इति ।

माधवीये शिवराघवसंवादे--

प्रातः काले तु न श्राद्धं प्रकुर्वीत कदाचन ।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः ॥ इति ।

नैमित्तिकानि सङ्क्रान्त्यादिनिमित्तप्रयुक्तानि ।

स्कान्दे--

उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन ।
स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥

अत्र—

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते ।
सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ॥

---

(१) ब्राह्मणात् लब्धमितिशेषः । क्षत्रियादिलब्धे तु यथेष्टविनियोग इत्यर्थः ।

इति परिभाषिता सन्ध्या न ग्राह्या किन्तु मुख्यैव मार्त्तण्ड-मण्डलास्तोदयकालरूपा। परिभाषितायाः रात्र्यन्तर्गतत्वाद्रात्रिनि-षेधेनैव तन्निषेधसिद्धेः।

मात्स्ये—

सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु॥ इति।

अथ पिण्डदाने निषिद्धकालः।

हेमाद्रौ बृहत्पाराशरपुलस्त्यौ—

युगादिषु मघायां च विषुवत्ययने तथा।
भरणीषु च कुर्वीत पिण्डनिर्वपणं नहि॥
अयनद्वितये श्राद्धं विषुवद्वितये तथा।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते॥

स्मृतिरत्नावल्याम्—

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः।
श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते॥

तथा—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥

अयं च भान्वादिषु पिण्डदाननिषेधस्तिथिवारनक्षत्रप्रयुक्त-काम्यश्राद्धविषयो बोध्यः। अत एवोक्तम्—

विश्वरूपनिबन्धे,

तिथिवारप्रयुक्तो यो निषेधः समुदाहृतः।
स श्राद्धे तन्निमित्ते स्यान्नान्यश्राद्धे कदाचन॥ इति।

महालयादौ रविवारादिष्वपि निर्वपेदित्यपि—

अत्रिः,

महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि।
तीर्थेऽपि निर्वपेत्पिण्डान् रविवारादिकेष्वपि॥ इति।

विवाहाद्युत्तरं निषेधमाह--

**कार्ष्णाजिनिः,**

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।

उत्तरार्धं तदेव ।

**हेमाद्रौ ज्योतिःपराशरः--**

विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥

क्वचित्प्रतिप्रसवमाह तत्र स एव--

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा । इति ।

**मदनरत्ने स्मृत्यन्तरे--**

पिण्डान्सपिण्डा नो दद्युः प्रेतपिण्डं विनात्र तु ।
पितृयज्ञे च यज्ञे च गयायां दद्युरेव ते ॥ इति ।

पितृयज्ञे=पिण्डपितृयज्ञे । यज्ञे=पित्र्येष्ट्याम् । ते=स-पिण्डाः ।

**(१)वृद्धशातातपः,**

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरश्च न लुप्यते ॥
अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितम् ॥ इति ।

## अथ तर्पणम् ।

**गर्गः—**

पूर्वं तिलोदकं दत्त्वा अमाश्राद्धं तु कारयेत् ।

---

(१) अतः पूर्वम्—बृहस्पतिः—
तीर्थे सम्वत्सरे प्रेते पितृयोगे महालये ।
पिण्डदानं प्रकुर्वीत युगादिमरणीमघाः ॥
वर्ज्या इत्यर्थः । इत्यधिकं पुस्तकान्तरे ।

प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ॥
पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् । इति ।

इदं च श्राद्धाङ्गतर्पणं भिन्नमेव ज्ञेयम् । न तु नित्यतर्पणस्यैव परेऽहन्युत्कर्ष इति । प्रत्यब्दाङ्गं तिलं दद्यादिति सङ्ग्रहवचनेऽङ्गग्रहणात् । एतच्च—

यस्तर्पयति तान्विप्रः श्राद्धं कृत्वा परेऽहनि ।
पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम् ॥

इति गर्गोक्तेः ।

परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् ।
तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि ॥

इति बृहन्नारदीयवचनाच्चावश्यकम् । तच्च श्राद्धेऽप्यवर्गस्यैव परेद्युः कार्यम् ।

प्रत्यब्दाङ्गं तिलं दद्यान्निषिद्धेऽपि परेऽहनि ।
वर्गैकस्य क्षयो येषामन्येषां तु विवर्जयेत् ॥

इति सङ्ग्रहवचनात् । तिलं=तिलोदकम् । सकृन्महालये तु परेद्युरेव ।

सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि ।

इति गर्गवाक्यात् ।

कपिलः—

मन्वादिषु युगाद्यासु दर्शे सङ्क्रमणेषु च ।
पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम् ॥
अर्धोदये गजच्छाये षष्ठ्यां चैव महालये ।
भरण्यां च मघाश्राद्धे पिण्डान्ते तर्पणं भवेत् ॥ इति ।

षष्ठ्यां=कपिलषष्ठ्याम् । पिण्डान्ते=श्राद्धसमाप्तावित्यर्थः । दर्शादौ श्राद्धाङ्गतर्पणस्य श्राद्धात्पूर्वं विहितत्वान्नित्यतर्पणेनैव प्रसङ्गसिद्धिः । पित्रादिवार्षिके तु नित्यतर्पणं तिलवर्जं करणीयम् ।

सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥

इति वृद्धमनूक्तेः ।

नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम् ।

इति सङ्ग्रहवचनाच्च । तीर्थश्राद्धे विशेषाभावाद्दर्शवत्तर्पणं ज्ञेयम् । तद्विधिर्निर्णयसिन्धौ सङ्ग्रहे—

स्नात्वा तीरं समागत्य उपविश्य कुशासने ।
सन्तर्पयेत्पितॄन्सर्वान्स्नात्वा वस्त्रं च धारयेत् ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।
नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ॥ इति ।

तच्च स्नानोत्तरं सन्ध्यावन्दनं कृत्वैव कार्यम् ।

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

इति दक्षवचनात् ।

वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धेऽनुमासिके ।
सम्वत्सरविमोके च न कुर्यात्तिलतर्पणम् ॥

श्राद्धाङ्गमित्यर्थः ।

## अथ नित्यतिलतर्पणे कालनिषेधः ।

गार्ग्यः—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

स्मृत्यर्थसारेऽपि—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।

उत्तरार्धं तदेव ।

स्मृतिचन्द्रिकायां मरीचिः—

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।

भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

तत्रैव पुराणे—

पक्षयोरुभयो राजन्! सप्तम्यां निशि सन्ध्ययोः ।
विद्यापुत्रकलत्रार्थी तिलान् पञ्चसु वर्जयेत् ॥

अत्र प्रतिप्रसवः क्वचित् ।

गर्गः—

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥

पृथ्वीचन्द्रोदये--

तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

स्मृत्यर्थसारेऽपि—

तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदा । इति ।

कात्यायनः—

उपरागे पितुः श्राद्धे पातेऽमायां च सङ्क्रमे ।
निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥ इति ।

यत्र तिलालाभस्तत्र सुवर्णाद्यन्वितं तर्पणं कार्यमित्याह स्मृतिचन्द्रिकायां—

योगियाज्ञवल्क्यः,

तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भमात्रेण वा पुनः ॥ इति ।

पतितपितुस्तु श्राद्धतर्पणादि नास्त्येव ।

वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥

इति षट्त्रिंशन्मतात् । सन्न्यस्ते जीवतीत्यर्थः । मृते सन्न्यस्ते तत्प्रभृत्येव कार्यम् ।

अथ क्षयाहाज्ञाने निर्णयः।

बृहस्पतिः—

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति।
समाप्तश्चेत्प्रविज्ञातस्तद्दर्शे स्यान्मृतेऽहनि॥

ज्ञातमासदर्श एव मृताह इत्यर्थः। कालान्तरमाह-

मरीचिः,

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि।
एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषतः॥

विशेषत इत्युक्त्या शुक्लपक्षैकादश्यामपि कार्यमिति हेमाद्रिः। मम तु प्रतिभाति विशेषत इतिकथनात्कृष्णैकादश्यामेव कर्त्तव्यम्। श्राद्धकर्मणि कृष्णपक्षस्य प्राशस्त्यात्।

तथा च पराशरः—

देशान्तरगतो विप्रः प्रवासात्कालकारितात्।
देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि॥
कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या।
उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत्॥ इति।

दिनमासयोरज्ञाने तु भविष्यपुराणे—

दिनमेव न जानाति मासं वापि कदाचन।
कार्यं तेन अमाया वै श्राद्धं माघेऽथ मार्गके॥ इति।

यदा दिनमेव जानाति न मासं तदाषाढो माघो वा ग्राह्यः।

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु।
तदा आषाढके मासि माघे वा तद्दिनं भवेत्॥

इति बृहस्पतिवचनात्। यदा देशान्तरे मृतस्य पुंसो मरणदिनमासौ न विजानाति किन्तु प्रस्थानदिनमासौ जानाति तदा तावेव ग्राह्यौ।

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।

प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा ॥

इति बृहस्पत्युक्तेः । अत्राप्यन्यतरास्मरणे पूर्ववन्निर्णयः । प्रास्थानिकदिनमासाज्ञाने तु—

**भविष्ये,**

मृतवार्त्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु । इति ।

अज्ञातमरणकस्य क्रियाकालमाह—

**जातूकर्ण्यः,**

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ।
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ॥
तदादीन्येव सर्वाणि प्रेतकार्याणि सञ्चरेत् । इति ।

अत्र प्रोषित इत्येव विवक्षितम् अनुवाद्यविशेषणत्वात् । पितरीति तद्विशेषणमविवक्षितम् । तेन पित्रतिरिक्तानां सङ्ग्रहः ।

**बृहस्पतिस्तु--**

यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदानेन तस्य स्यादवधारणम् ॥

इति पक्षान्तरमाह । प्रेतक्रियोत्तरमागतस्य विशेषमाह—

**वृद्धमनुः,**

प्रोषितस्य यदा कालो गतश्चेत् द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥
जीवन्यदि स आगच्छेत् घृतकुम्भे नियोजयेत् ।
उद्धृत्य स्नापयित्वा तु जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्यात्त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥

इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः।

इति सर्वं शिवम्।

## अथ श्राद्धविघ्ने निर्णयः।

तत्र क्षणदानोत्तरं ब्राह्मणस्य शावाशौचं सूतकाशौचं वापतेच्चेत्तन्नास्तीत्युक्तम्—

ब्राह्मे,

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्। इति।

कर्तुस्तु विष्णुराह—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥ इति।

प्रारम्भस्तेनैवोक्तः—

आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥ इति।

अत्र प्रसङ्गात्किञ्चिच्चिन्त्यते। अत्र यद्यपि सामान्यतो यज्ञे समन्त्रकऋत्विग्वरणरूपप्रारम्भवत एव यजमानस्याशौचाभावः प्रतीयते तथापि स दीक्षणीयेष्ट्या संस्कृतस्यैव तस्य बोध्यः। सूतकं न स्यादित्युपक्रम्य—

न दीक्षण्याः परं यज्ञे न कृच्छ्रादितपश्चरन्।
पितर्यपि मृते नैषां दोषो भवति कर्हिचित्॥
आशौचं कर्मणोऽन्ते स्यात् त्र्यहं वा ब्रह्मचारिणाम्।
इत्यपरार्के इति छन्दोगपरिशिष्टात्।
तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे।
स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकम्॥

इति ब्रह्मपुराणाच्च। अवभृथस्नानादरुत्येव। एवं चाधा-

नेष्टिपशुबन्धचातुर्मास्यादौ दीक्षणीयाभावाद्यजमानस्य प्रधानसङ्कल्पोत्तरमाशौचपातेऽस्त्येवाशौचम् । तथापि कर्मसमाप्तिस्तु स्यादेव ।

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥

इत्यपरार्कधृतपैठीनसिवचनात् । तत्रानुत्तरे क्षिपेयुरितिग्रन्थान्तरे ।

**याज्ञवल्क्यः--**

ऋत्विजां दीक्षितानां च याज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ इति ।
ऋत्विजां मधुपर्कोत्तरमेव सद्यःशुद्धिः ।
गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः ।
पश्चादाशौचे पतिते न भवेदिति निश्चयः ॥

इति ब्राह्मात् । अत एव रामाण्डारः "चतुर्णां वरणपक्षेऽन्येषामाशौच अन्ये आगमयितव्या" इत्याह प्रायश्चित्ते । एवं स्मार्तेऽपि तुलाकोटिहोमोत्सर्गादौ मधुपर्के सति ऋत्विजां दोषाभावो ज्ञेयः । अत्र सर्वत्र ऋत्विग्दीक्षितानां तु सत्यप्याशौचाभावे—

श्रौतकर्मणि तत्काले स्नातः शुद्धिमवाप्नुयात् ।

इति व्याघ्रवचनाद्भवत्येव स्नानम् । व्रतशब्देन प्रायश्चित्तार्थत्वेनान्यथा वानुष्ठीयमानं द्वादशाब्दवनवासकृच्छ्रचान्द्रायणादि । सत्रपदेन मुख्यमेव सत्रं गृह्यते तत्र वरणाभावात् । नान्दीमुखं नान्दीश्राद्धम् । आदिना नान्दीश्राद्धवत्संस्कारकर्ममात्रग्रहणम् । विवाहे सद्यःशौचं केषामित्यपेक्षायाम्—

ब्रह्मपुराणे,

दातुः प्रतिग्रहीतुश्च कन्यादाने च नो भवेत्।
विवाहयिष्णोः कन्याया लाजहोमादिकर्मणि॥ इति।

दातृप्रतिग्रहीतृग्रहणमुपनयनादिषु संस्कार्यसंस्कारकयोरुपलक्षणं ज्ञेयम्। अत्र सर्वत्र साङ्ग एव तत्तत्कर्मण्याशौचाभावो बोध्यः। दानजपहोमार्चनादयस्तु व्रतशब्देनैव सङ्गृहीताः। पाकपरिक्रिया=पाकारम्भः।

ब्राह्मे--

गृहीतनियमस्यापि न स्यादन्यस्य कस्य चित्। इति।

योगीश्वरः—

दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते॥

दाने=सन्ततान्नदाने।

विष्णुः—

आशौचं न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि न राजाज्ञाकारिणां तदिच्छायां न देवप्रतिष्ठाविवाहयोः पूर्वसम्भृतयोरिति।

प्रचेताः—

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः॥

पैठीनसिः--

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्॥

वैरिवेष्टितदुर्गसंरक्षणार्था यज्ञा दुर्गयज्ञाः शान्तिकोच्चाटनादयः। यात्रायां प्रारब्धायाम्। तीर्थकर्मणि=आकस्मिकतीर्थप्राप्तौ। अत्र च नृपकारुवैद्यादावाशौचसङ्कोचस्तत्त-

त्कार्ये आपदि च बोध्यः ।

स्वस्वकाले त्विदं सर्वं सूतकं परिकीर्त्तितम् ।
आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥

इति दक्षोक्तेः । दातृगृहे मरणादौ हेमाद्रौ--

ब्राह्मे,

भोजनार्थे तु सम्भुक्ते विप्रैर्दातुर्विपद्यते ।

गृहे इति शेषः ।

यदा कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः । इति ।

अथाशौचेन श्राद्धप्रतिबन्धे पाराशरीये-

ऋष्यशृङ्गः,

देये पितृणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते ॥ इति ।

अत्राप्यन्तरितकालो हेमाद्रौ षट्त्रिंशन्मते--

मासिके चाब्दिके त्वह्नि सम्प्राप्ते मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः ॥

मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषतः ॥

अत्रिः—

तदहश्चेत्प्रदुष्येत केन चित्सूतकादिना ।
सूतकानन्तरं कार्यं पुनस्तदहरेव वा ॥

विवेचनकारास्तु 'पुनस्तदहरेव वा' इदं मासिकपरमित्याहुः । यद्याशौचान्तो मलमासे पतेत्तर्हि तत्राप्यन्तरितश्राद्धं कार्यम् ।

प्रतिसम्वत्सरश्राद्धमाशौचात्पतितं च यत् ।

मलमासेऽपि तत्कार्यमिति भागुरिभाषितम् ॥

इति भृगुवचनात् । चकारस्त्वर्थे । रोगादिना प्रतिबन्धे तु मृताह एवान्येन पुत्रादिना श्राद्धं कारणीयम् । पूर्वोक्तवचनात् ।

अथ भार्यारजोदर्शने(१) ।

तत्र पाकासम्भवे दर्शादिश्राद्धमामेनैव कार्यम् ।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादि नियतं माससम्वत्सरादृते ॥

इति पराशरमाधवधृतहारीतवचनात् । श्राद्धविघ्ने=

---

(१) अत्र--गर्भिणीपतिरजस्वलापतिवरणं न कार्यम् । स्मृतौ--

रजस्वलाङ्गना यस्य गर्भिणी वा पराभवेत् ।
न यज्ञे वरणं योग्यं गालवो मुनिरब्रवीत् ॥

यज्ञशब्देन आधानादिकर्मापि गृह्यते । रुद्रस्कन्दकारिकायां तु--

रजस्वलायां भार्यायामार्त्विज्यं श्राद्धभोजनम ।
यात्रामम्बुनिधिस्नानं वर्जयेत्तत्पतिः सदा ॥
गर्गः--क्षुरकर्म तथार्त्विज्यं यात्रामभ्यङ्गमेव च ।
देवतार्चा परगृहे सागरस्नानमेव च ॥
श्राद्धभुक्तिश्च वर्ज्यं स्याद्यदि पत्नी रजस्वला ॥

शाट्यायनः—रजस्वलापतिर्यात्रां श्राद्धभुक्तिं तथार्त्विजम् ।
सिन्धुस्नानं तथार्त्विज्यं क्षुरकर्म च वर्जयेत् ।
भाण्डस्पर्शपर्यन्तमिति गौतमभाषितम् ।
दैवे पित्र्ये तथार्त्विज्ये परार्थे जपकर्मणि ॥
उदक्यासूतिकाभर्ता वर्जनीयः प्रयत्नतः ।
उदक्यायाः पतिं चैव सूतिकायाः पतिं तथा ॥
भाण्डस्पर्शनपर्यन्तं दैवे पित्र्ये च वर्जयेत् ।
काम्यकर्मणि हीनकल्पं न कुर्यात् ॥
हीनकल्पं न कुर्वीत सति द्रव्ये कथञ्चन ।
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥
न पारलौकिकं तस्य दुर्मतेर्विद्यते फलम् । इति मनुवचनात् ।

इत्यधिकं पुस्तकान्तर ।

पत्नीरजोदर्शनरूपे श्राद्धविघ्ने । तत्राह पाराशरीये उशना--

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।

सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते ॥ इति ।

कात्यायनोऽपि--

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।

आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥ इति ।

व्याघ्रपादोऽपि--

आर्त्तवे देशकालानां विप्लवे समुपस्थिते ।

आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि । इति ।

कालादर्शे तु पत्नीरजोदर्शने दर्शश्राद्धं पञ्चमदिने कार्यमिति पक्षान्तरमुक्तम् । तत्र नियतपदग्रहणात् गौणकालविधायकवचनाभावादितिभावः । आब्दिकं हि पत्न्यां रजस्वलायां सत्यामपि तद्दिन एव कार्यम् ।

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।

अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित् ॥

इति पाराशरीये लौगाक्ष्युक्तेः ।

मरीचिरपि--

अनग्निकः प्रवासी च यस्य भार्या रजस्वला ।

आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृतेऽहनि ॥ इति ।

रजोदोषे सत्यपि तदामश्राद्धं मृतेऽहनि न कुर्यात्किन्तु पक्वान्नेनैव कुर्यादित्यर्थः । तथाच--

तिथिच्छेदो न कर्त्तव्यो विनाशौचं यदृच्छया ।

पिण्डश्राद्धं च दातव्यं विच्छित्तिं नैव कारयेत् ॥

इति ऋष्यशृङ्गवचोऽपि मञ्जुलं सङ्गच्छते । यत्तु हेमाद्र्यादिपरिधृतं वचनम्--

मृतेऽहनि तु सम्प्राप्ते यस्य भार्या रजस्वला ।

श्राद्धं तत्र न कर्त्तव्यं कर्तव्यं पञ्चमेऽहनि ॥ इति ।

तदपुत्रस्त्रीकर्तृकश्राद्धविषयम् । तथाच यस्य भार्या रजस्वलेत्यस्यायमर्थः। यस्य श्राद्धकर्त्री भार्या रजस्वलेति। तथाच—

श्लोकगौतमः,

अपुत्रा तु यदा भार्या सम्प्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ॥ इति ।

पाराशरीये प्रभासखण्डेऽपि—

शुद्धा स्यात्तु चतुर्थेऽह्नि स्नानान्नारी रजस्वला ।
दैवे कर्माणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥ इति ।

असावेव पक्षः कालादर्शपराशरमाधवप्रयोगपारिजातविवेचनकारसिन्धुकारादीनां सम्मतः । हेमाद्रिस्तु "पाणिग्रहणाद्धि सहत्वं सर्वकर्मसु" इति वचनेन भार्याया अपि श्राद्धे सहाधिकारात्तस्यां रजस्वलायामशुचित्वेनानधिकारे व्यासज्यवृत्तेर्भर्तृगतस्याधिकारस्य विघातात्पञ्चमादिने एव श्राद्धं युक्तम्। तदर्थं यस्य श्राद्धकर्त्तुरित्येवार्थो मृतेऽहनीति वचनस्य। "पुत्रवत्स्वपि दारेषु"इत्यादीनि वचनानि सहाधिकृतभार्यान्तरविषयाणीत्याह । तन्मन्दम् । "जायापती अग्निमादधीयाताम्" इत्यादिना आधाने सहाधिकारादाधानसिद्धाग्निसाध्यकर्मस्वपि सहाधिकारसिद्धेः "पाणिग्रहणाद्धि" इतिवचनप्रणीतस्य सहाधिकारस्योभयसंयोगेनोत्पन्नश्रौतस्मार्त्ताग्निसाध्यकर्मस्वेव न्याय्यत्वात् । श्राद्धकर्मणि निरग्नीनामप्यधिकाराच्छ्राद्धकर्मणः पत्नीसाध्यकर्माघटितत्वाच्च। तस्मादेकभार्यः साग्निकोऽपि तस्यां रजोवत्यामन्नेन मृताह एवाब्दिकमासिकश्राद्धे कुर्यात्। श्राद्धकर्त्री स्त्री चेद्रजस्वला तदाब्दिकं मासिकं च पञ्चमदिनादौ कुर्यात् अमावास्यानिमित्तं तु तस्या लुप्यत एवेति । श्रीमातामहगुरवस्तु हेमाद्र्यनुसारेण मृताहनीतिवचनात्कर्तुर्भार्यायां रजस्वलायां सत्यां पञ्चमदिने एव

क्षयाहश्राद्धं कार्यं "पुष्पवत्स्वपि दारेषु" इत्यादीनि वचनानि तत्पराण्येवेत्याहुः ।

मतद्वयं प्रमाणत्वाल्लोकैराद्रियतेऽधुना ।
विस्तरस्तत्र निर्दिष्टो नास्माभिर्ग्रन्थगौरवात् ॥

अथान्वारूढायाः क्षयाहनिर्णयः ।

यदि पत्नी पत्या सहैकतिथावन्वारूढा तर्हि क्षयाहश्राद्धे विश्वेदेवपाकादितन्त्रता ब्राह्मणः पिण्डश्च भिन्न इत्यसंशयमेव ।

एकचित्यां समारूढौ म्रियेते तदम्पती यदि ।
तन्त्रेण श्रपणं कृत्वा पृथक् पिण्डं समाचरेत् ॥

इति प्रचेतोवचनात्,

मृतेऽहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ॥

इति लौगाक्षिवचनाच्च । समासेन=तन्त्रेण श्रपणमिति शेषः । पिण्डदानं पृथगसपत्नीकम् । नवश्राद्धमपि तद्वदेव कुर्यात् ।

गार्ग्योऽपि--

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
पृथक्श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक् ॥ इति ।

श्राद्धशब्दो ब्राह्मणभोजनपरः । ओदनशब्दः पिण्डपरः । तेन विश्वेदेवादीनां स्वारादुपकारिणां तन्त्रता ब्राह्मणभोजनपिण्डदानयोरतन्त्रतेतिसिद्धम् । यत्तु भृगुवचनम्--

या समारोहणं कुर्याद्भर्तृचित्यां पतिव्रता ।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत् ॥
प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत् । इति,

तदपि स्पष्टार्थतया पृथक्पिण्डप्रदानपरमेव । एतेनेदं येषां वार्षिकमेकोद्दिष्टमुक्तं तद्विषयमिति केषां चिदुक्तिः परास्ता । यदा तिथ्यन्तरेऽन्वारूढा तदा तत्तिथौ भिन्नमेव क्षयाहश्राद्धं कर्त्तव्य-

मिति सर्वनिबन्धकारसम्मतसिद्धोऽर्थः । दाक्षिणात्यास्तु तिथिभेदेऽपि भर्तृतिथावेव विश्वेदेवाद्याधारादुपकारकाङ्गतन्त्रेण द्वयोरपि श्राद्धं समाचरन्ति । तत्र--

एकचित्यां समारूढौ दम्पती प्रमृतौ यदि ।
पृथक्श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि ॥
मृतानामपि भृत्यानां भार्याणां पतिना सह ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं स्वामिक्षयेऽहनि ॥

इति चन्द्रप्रकाशे लिखितं वचनमिदं प्रायोऽमूलं पश्यामः। ननु भिन्नतिथिसमन्वारूढायाः कथमेकचितिसमारूढत्वमितिचेत्, शृणु । चितिशब्दो यूपादिशब्दवद्दृष्टादृष्टसमुदायवाची तेन देशान्तरे कालान्तरे वाऽमन्त्रकदाहेऽपि संस्काराभावेनास्त्येव पलाशादिप्रकृतिदाहकाले चितिभेदाभावः इतरथा सार्वजनीनोऽनुगमनरूप आचारो व्याहन्येत तस्मादयमेवार्थो युक्तः । व्यवस्थापितं चैवमेव मूलं प्रकारान्तरेण द्वैतनिर्णयेऽस्मन्मातुः पितामहचरणैः । तेषां सिद्धान्तकारिका अपि—

एकस्यामथ भिन्नायां तिथौ कालान्तरेऽपि वा ।
अन्वारूढजनन्यास्तत्पत्न्याश्चापि वार्षिकम् ॥
पार्वणेन विधानेन विश्वेदेवादितन्त्रतः ।
पिण्डब्राह्मणभेदेन समासविधितो भवेत् ॥
मासिकादिष्वेवमेव न्यायतोऽनुष्ठितिर्मता ।
अपवादान्नवश्राद्धे पृथक्पृथगनुष्ठितिः ॥
तत्राप्यसम्भवे तन्त्रं वार्षिकादिष्विवाचरेत् । इति ।
ग्रन्थगौरवभीत्येह विस्तृतिर्न प्रदर्शिता ।
पश्यन्तु तां पुनर्द्वैतनिर्णयादिषु भावतः ॥
विस्तृतौ मोहमाप्नोति जनः शास्त्राकृतश्रमः ।
अतोऽत्र विषयान्वच्मि सङ्क्षेपेणाखिलानहम् ॥

अथ श्राद्धसन्निपाते निर्णयः प्रदर्श्यते ।

पराशरीये भृगुः,

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुर्याच्छ्राद्धं कृत्वा पृथक्पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कुर्यात्सन्निपातेष्वयं क्रमः ॥ इति ।

एककाले=एकतिथौ ।

अत्रिरपि—

बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक् ॥ इति ।

द्वयोरित्यर्थे द्वाभ्यामित्यार्षः । इदं च तन्त्रेण श्रपणं पृथक्पाकासामर्थ्ये इति केचित् ।

अत्र—

पित्रोः श्राद्धे समं प्राप्ते न चेत्पर्युषितेऽपि वा ।

पर्युषिते=चिरन्तने ।

पितृपूर्वं सुतः कुर्यादन्यत्रासन्नियोगतः ॥

इति कार्ष्णाजिनिवचनात् स्मृत्यर्थसारपराशरमाधवमदनपारिजातकालादर्शादयोऽविशेषण पूर्वं पितुः क्षयाहश्राद्धं ततो मातुरित्याहुः । हेमाद्रिस्तु मरणपौर्वापर्यज्ञाने मरणक्रमेणैव मरणपौर्वापर्याज्ञाने पितृपूर्वकमित्याह ।

भवेद्यदि सपिण्डानां युगपन्मरणं यदा ।
सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥ इति ।

पार्वणैकोद्दिष्टयोर्युगपत्प्रसक्तावाह--

जावालिः,

यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वाभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥

अत्रैकोद्दिष्टमभिनिर्वर्त्य पार्वणं समाचरेदित्यन्वयः । एको-

दिष्टस्य पार्वणात्प्राक्कालीनत्वबोधनात्। एवं दर्शे क्षयाहप्रसक्तौ प्रयोगपारिजाते—

आश्वलायनः,

यन्मास्येवाब्दिकं श्राद्धं यस्य पित्रोर्भवेदिह।
प्राक्पिण्डदानात्तन्मासि पार्वणं न समाचरेत्॥ इति।

मासि=अमावास्यायाम्। पार्वणम्=दर्शश्राद्धम्। तथा च वार्षिकात्प्राक् दार्शं न कार्यमित्यर्थः। अत्र यद्यपि—

नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्।

इतिप्रचेतोवचनाच्छ्राद्धद्वयमेकस्यैकाहनि निषिद्धं तदनिमित्तकम्। सनिमित्तकान्यनेकान्यपि समं कार्याणि। तदुक्तम्-

जाबालिकात्यायनाभ्याम्,

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदयम्॥
द्वे बहूनि निमित्तानि जायेरन्नेकवासरे।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्॥ इति।

तेन नानानिमित्तान्यनेकश्राद्धानि कुर्वतां न दोषः। तथाहि। दर्शे चेत्पितृक्षयाहस्तदा क्षयाहप्रयुक्तं श्राद्धं कृत्वा दार्शं कार्यं तदपि समाप्य ग्रहणं चेत्तन्निमित्तकमपि भोक्त्रभावे आमादिना कृत्वा पुत्रजन्म यदि स्यात्तन्निमित्तमपि कुर्वीत। एवं तीर्थविशेषेषु तत्तत्तीर्थफलावाप्तये नानाश्राद्धानि कार्याणि। अनेकोद्देश्यकानां श्राद्धानां कालैक्ये तन्त्रेणानुष्ठानं यथा दर्शादौ पितृश्राद्धमातामहश्राद्धयोः। एवमनेकनिमित्तकश्राद्धसम्पातेऽगृह्यमाणविशेषे प्रधानानामङ्गानां च तन्त्रेणानुष्ठानम्। यथा सङ्क्रान्तिव्यतीपातादिश्राद्धानाम्। तत्र सङ्कल्पवाक्ये सङ्क्रान्तिव्यतीपातादिश्राद्धं च तन्त्रेण करिष्ये इत्युल्लेखः। एकदेवताकयोः काम्यनित्यश्राद्धयोः सन्निपाते काम्येन नित्यश्राद्धसिद्धिः। त-

दुक्तम्—

पाराशरीये स्मृतिसङ्ग्रहे,

काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति । इति ।

दैवतैक्ये क्वचिदेकनिमित्तकानुष्ठानेनाऽप्यन्यानिमित्तकस्य प्रसङ्गसिद्धिर्भवतीत्युक्तम्—

कालादर्शे,

नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥
दार्शिकस्य तु मन्वादेः सम्पाते श्राद्धकर्मणः ।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥ इति ।

देवताभेदे तु तन्त्रापवाद उक्तस्तत्रैव—

नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि ।
नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ।
प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च ॥
सम्पाते देवताभेदात् श्राद्धयुग्मं समाचरेत् । इति ।

## अथ सपिण्डीकरणम् ।

तच्च सिद्धान्नेनैव कार्यं नामादिना । तदुक्तम्—

स्मृत्यर्थसारे,

सपिण्डीकरणं तु सर्वथाऽन्नेनैव कार्यमिति ।

तत्फलमाह विष्णुधर्मोत्तरे मार्कण्डेयः,

कृते सपिण्डीकरणे नरः संवत्सरात्परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥ इति ।

भोगदेहः=पितृदेहः । येषां सपिण्डीकरणं निषिद्धं तेषां मन्त्रश्राद्धादिविधानात्तावन्मात्रेणैव भोगदेहप्राप्तिः कल्प्या ।

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे चैकादशे चाब्दे सम्पूर्णे वा शुभागमे ॥

इत्यादिवचनैस्तस्यैकादशाहद्वादशाहतृतीयपक्षतृतीमासषष्ठमासैकादशमाससंवत्सरान्तश्चभागमा इत्यष्टौ कालाः सामान्यतः कथिताः । नवममासेऽपि केषाञ्चिन्मते तत्कालत्वेनोपदिष्टः पैठीनसिना, सम्वत्सरान्ते विसर्जनं नवमे मासीत्येके ।

विसर्जनं=प्रेतत्वविसर्जनं सपिण्डीकरणमितियावत् । तत्रेयं व्यवस्था ।

हारीतः—

या तु पूर्वममावास्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥

मृताहाद्दशमी या तिथिस्तत्परायाममावास्यायामित्यर्थः । अत एव--

काष्र्णाजिनिः,

सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान्सुतः ।
परतो दशरात्राच्चेत्कुहूरब्दोपरीतरः ॥ इति ।

जाबालोऽपि —

सपिण्डीकरणं कुर्यात्पूर्वे दर्शेऽग्निमान्सुतः ।
परतो दशरात्रस्य पूर्णे त्वब्दे तथेतरः ॥ इति ।
इदं चैकादशेऽह्नि दर्शागमे ज्ञेयम् । आहिताग्नेः--
सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते ॥

इति गालववचनात्सपिण्डीकरणमन्तरेण पिण्डपितृयज्ञस्य कर्त्तुमशक्यत्वान्मृतपितृकस्य तदकरणे प्रत्यवायात् । तथाच

जाबालः,

नासपिण्ड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत् ।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते ॥ इति ।

अत्र गालववाक्ये आहिताग्निपदग्रहणादौपासनाग्निमतः पिण्डपितृयज्ञानुरोधेन नैतस्मिन्काले सपिण्डीकरणं किन्तु दशाह-

मध्यवर्त्तिदर्शवत्पिण्डपितृयज्ञो लुप्यते। दर्शानागमे तु द्वादशाहे मुख्यः कालः। तथाच—

भविष्यपुराणे,

यजमानोऽग्निमान् राजन्प्रेतश्चाप्यग्निको भवेत्।
द्वादशाहे भवेत्कार्यं सापिण्डीकरणं सुतैः॥ इति।

गोभिलोऽपि—

साग्निकस्तु यदा कर्त्ता प्रेतश्चाप्यग्निमान् भवेत्।

उत्तरार्धं तदेव। प्रतिबन्धेन तत्रान्तरिते कालमाह--

कात्यायनः,

एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डताम्॥ इति।

दर्शात्पूर्वं यस्मिन्कस्मिन् दिन इत्यर्थः। तत्राप्यन्तरिते त्रिपक्षादिषूत्तरकालेषु कार्यम्। तदाह साग्निकं प्रकृत्य—

गोभिलः,

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।
सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु॥ इति।

अत्र वचनेषु पुत्रः सुतैर्मातापित्रोरिति श्रवणाज्जनकजनयित्र्यतिरिक्तस्य सपिण्डीकरणे प्राप्ते साग्नेः कर्तुर्न द्वादशाहदर्शप्राक्तनयत्किञ्चिद्दिननियमः। एवमपुत्राहिताग्नेः पत्नी कर्त्र्यपुत्रायास्तस्याः पतिः कर्ता तदापि नासौ नियमो नापि त्रिपक्षनियमः किं त्वनियम एव। त्रिपक्षे सपिण्डीकरणविधायकवाक्ये एकेनानग्निपदेनानाहिताग्न्यविद्यमानाग्न्योरुभयोर्निर्देशायोगात्। प्रेतस्यैव साग्नित्वे तृतीयपक्षे कार्यम्।

प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत्।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके॥

इति सुमन्तुवाक्यात्। अत्रानग्निरिति बहुव्रीहिणा साग्निकपदोक्तः पुत्र एव प्रत्यभिज्ञायते।

लघुहारीतोऽपि—

अनग्निस्तु यदा वीर! भवेत्कुर्यात्तदा गृही।
प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिण्डनम्॥ इति।

अत्राधिकरणसप्तमीवशात्समस्ततृतीयः पक्षस्तत्कालः। एवं त्रिमासषण्मासादिष्वपि। अत्र श्रीमातामहास्तु यदा दम्पत्योरन्यतरस्य पूर्वं मरणेनाग्नयो विनियुक्तास्तदेतरस्य साग्नित्वाभावात्कालान्तरे तन्मरणे तु न त्रिपक्षनियमः। उत्सृष्टाग्नेरप्येवम्। विच्छिन्नाग्नेस्तु आत्मन्यग्निसद्भावात्तस्य साग्नित्वेन त्रिपक्ष एवेत्याहुः। उभयोः साग्नित्वे द्वादशाह एव।

साग्निकस्तु यदा कर्त्ता प्रेतश्चाप्यग्निमान्भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः॥

इति विज्ञानेश्वरमाधवोदाहृतसुमन्तूक्तेः। हेमाद्रिकालादर्शयोर्नेदं वचनम्। तेन तन्मते पितुरपि साग्निकस्यापि सपिण्डने साग्निकस्यापि पुत्रस्य न द्वादशाहकर्त्तव्यतानियमः। किन्त्वनियम एव। पूर्वयोर्मते तु नियमः। वचनसद्भावात्। एवं पूर्वयोरपि मते पितृव्यातिरिक्तस्य साग्निकस्यापि सपिण्डीकरणे साग्निकस्यापि पुत्रातिरिक्तस्य भ्रातृव्यादेर्न द्वादशाहनियमः पितुरित्युक्तेः। द्वयोरप्यनग्नित्वे तु—

भविष्ये,

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ!॥
द्वादशेऽहनि षण्मासे त्रिपक्षे वा त्रिमासि वा।
एकादशेऽपि वा मासि मङ्गलस्याप्युपस्थितौ॥ इति।

एते च सप्त काला इच्छया विकल्पन्त इति माधवः। वस्तुतस्तु बहुभिर्वचनैः सम्वत्सरान्तस्य मुख्यकालत्वादेतेऽनुकल्पा एवेति युक्तम्। पूर्णेऽब्दे इत्यत्र तूत्तरेऽह्नि ज्ञेयम्।

ततः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्।

इति नागरखण्डात्। वार्षिकदिन इति यावत्। एतेषु कालेषु द्वादशाहः प्रशस्त इत्याह--

व्याघ्रः,

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते॥ इति।

राजन्यवैश्ययोराशौचान्ते सपिण्डीकरणं कार्यम्। तथाच--

वृद्धमनुः,

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभुजाम्।
वैश्यानां तु त्रिपक्षाद्वाथवा स्यात्सपिण्डनम्॥ इति।

अथवेति पक्षान्तरम्। वैश्यानामाशौचान्ते त्रिपक्षे वेति। निर्णयामृते कात्यायनोऽपि—

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्। इति।

सर्वेषां=विप्रराजन्यविशाम्। शूद्राणां त्वाशौचे सत्यपि

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम्।

इति विष्णूक्तेर्द्वादशाह एव। अब्दपूर्त्तेः पूर्वमेव द्वादशाहे सपिण्डने क्रियमाणे आदौ षोडशश्राद्धापकर्षणं ज्ञेयम्। तथाच-

वृद्धवासिष्ठः,

श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डताम्।
तद्धानौ तु कृते प्रेतः पितृत्वं न प्रपद्यते॥ इति।

एवं च सति सपिण्डनोत्तरमपि स्वस्वकाले पुनर्यावदाब्दिकान्तान्यावर्त्तनीयानि।

यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश॥

इति गोभिलोक्तेः। विधिवत्=यथासम्प्रदायमेकोद्दिष्टक्रमेण पार्वणक्रमेण वेत्यर्थः। तदुक्तम्—

पैठीनसिना,

सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश।

एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

अत्र गोभिलवचने षोडशग्रहणेऽपि पुनरावृत्तिः प्राप्तकालानां न तु स्वस्वकालेऽनुष्ठितानाम् ।

अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः ॥

इति कार्ष्णाजिनिवचनात् । वृद्धिप्राप्तावश्यं सपिण्डनोत्तरमावर्त्तनीयानामनुमासिकानां भूयोऽपकर्षः कार्यः । तदुक्तम्—

शाट्यायनिना,

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥ इति ।

निषेधमाह कात्यायनः,

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् ।
अयातयामं मरणं न भवेत्पुनरस्य तु ॥ इति ।

यदि वृद्धिश्राद्धोत्तरं मासिकानि कुर्यात्तदा मृतस्य मरणं पुनर्भवेदिति निन्दारूपो दोषः । अत्र फलचमसे राजन्यवैश्यनिमित्तेन विहिते सोमाङ्गानामभिषवक्रयादीनां विधिर्न समानस्तद्वद्वृद्ध्यादिनिमित्तेन विहितः सपिण्डीकरणमासिकापकर्षः चौलोपनयनसमावर्त्तनविवाहाग्न्याधानेष्टापूर्त्ताद्यङ्गभूतवृद्धिश्राद्ध एव वर्त्तते न तु गर्भाधानसीमन्तजातकर्मनामकरणान्नप्राशनवास्तुपूजाव्रताद्यङ्गभूतवृद्धिश्राद्धेऽपीति निष्कर्षः । निर्णीतश्चायमेवार्थो द्वैतनिर्णयेऽस्मन्मातुः पितामहचरणैः । वृद्धिं विना त्वेतेषामनुमासिकानामपकर्षणं न कर्त्तव्यम् ।

अन्तरेणैव यो वृद्धिं प्रेतश्राद्धानि कर्षति ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥

इति शाट्यायनिस्मरणात् । विघ्नवशेन सर्वेष्वप्युक्तकालेषु न जातं चेत्सपिण्डनं तदा कालान्तरमाह—

ऋष्यश्रृङ्गः,

सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥ इति ।

तत्र पुत्रे सति स एव चिरकालादपि कुर्यात् न सन्निहितोऽपि भ्रातृतत्पुत्रादिर्यथाकालमपि ।

श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डनम् ।
प्रोषितावासिते पुत्रः कालादपि चिरादपि ॥

इति वायुपुराणवाक्यात् । तत्रापि ज्येष्ठस्यैवाधिकारः । तदाह—

प्रचेताः,

एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ।
कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक् पृथक् ॥

नन्वेवमेकादशाद्या इति प्रचेतोवाक्यादेकादशाहमासिकेष्वपि सपिण्डीकरणवज्ज्येष्ठमात्रकर्तृकताप्रसङ्ग इति चेत्, मैवम् ।

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे ॥
आद्याहाद्द्वादशाहाच्च मध्ये याः स्युः क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ।
तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा ॥
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ ! कार्यास्तत्तनयैस्तथा ॥

इति विष्णुपुराणे पराशरवाक्यात् । अत्र हि मासिमा-

सीत्यस्याविवक्षितत्वादेकादशाहादेः सपिण्डीकरणप्राक्कालीनैकोद्दिष्टमात्रेऽस्य मध्यमक्रियात्वेन सपिण्डादीनां नृपत्यन्तानां तत्र कर्तृत्वोक्त्या ज्येष्ठकर्तृकत्वानियमस्य तत्रापवादे कृते तदुत्तरे सपिण्डीकरण एव ज्येष्ठकर्तृकत्वनियमोऽवतिष्ठते। सपिण्डीकरणोत्तरक्षयाहामावास्यामहालयादिरूपोत्तरक्रियासु यद्यपि पुत्राभावे "पुत्राद्यैरेव चोत्तरा" इत्यनेन

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः।

इतिनिर्दिष्टानां भ्रातृसन्तत्यन्तानां दौहित्रदौहित्रतनयानां कर्तृत्वमुक्तं, तथापि तत्सपिण्डादीनामवनीपत्यन्तानां निवृत्त्यर्थं न तु ज्येष्ठे सतीतरेषां कर्तृत्वाय। "आब्दिकं तु पृथक् पृथक्" इति प्रचेतोवाक्यशेषस्तु विभक्तविषयः। ज्येष्ठेऽसन्निहिते कनिष्ठ आहिताग्निः कुर्यादेव। अन्यथा पितृयज्ञासिद्धेः। एवमावश्यकवृद्धिश्राद्धेऽपि कनिष्ठोऽन्यः सपिण्डो वा कुर्यात्।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः॥

इति लघुहारीतवचनात्। नन्वत्र वचने क्त्वाप्रत्ययेन समानकर्तृकत्वावगमात् कथं मृतस्य पुत्रादेरन्य एव सपिण्डः सपिण्डीकरणं करोत्यन्यश्च सपिण्ड आभ्युदयिकमितिचेत्, मैवम्।

प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्॥

इति मेधातिथिपरिधृतवचनान्मूलपुरुषाच्चतुर्थपुरुषमभिव्याप्य यस्य कस्यापि सपिण्डस्य मृतस्य मासिकसपिण्डीकरणं विनाऽऽभ्युदयिककर्तुराभ्युदयिके योग्यतासिद्ध्यभावेन क्त्वोक्तस्य समानकर्तृकत्वस्याविवक्षितत्वात्। अत्र भ्रात्रादयो मृतस्य बोध्याः। केनापि निमित्तेन कनिष्ठेन सपिण्डीकरणे कृतेऽसन्निहितज्येष्ठपुत्रोऽपि पुनः प्रेतशब्दमन्तरा तत्कुर्यात्।

यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु ।
तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ॥

इति स्मृतेः । स्मृत्यर्थसारे तु—

विभक्ता ऋद्धिकामाश्चेत्पुत्राः कुर्युः पृथक्पृथक् ।

इतिपक्षान्तरमुक्तम् । ये तु वृद्ध्यादिनिमित्तं विनापि

मातापित्रोर्मृतेः काले ज्येष्ठे देशान्तरे स्थिते ।
कनिष्ठेन प्रकर्त्तव्यं सपिण्डीकरणं तदा ॥

इतिवचनात्कनिष्ठेन कार्यमित्याहुः । तेऽस्य वचनस्याप्रामाण्येन निरस्ता वेदितव्याः । सपिण्डीकरणेतिकर्त्तव्यतामाह—

**याज्ञवल्क्यः,**

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
येसमाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् । इति ।

अर्घ्यसंयोजनं च प्रेतार्घ्यदानानन्तरमवशिष्टेन जलेन पितामहार्घ्यदानात्पूर्वं कार्यम् । तथा च मदनरत्ने-

**ब्रह्मपुराणे,**

प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ।
ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक् ॥
येसमाना इति द्वाभ्यां तज्जलं तु समर्पयेत् ।
अर्घ्योक्तेनैव विधिना प्रेतपात्रादि पूर्ववत् ॥
तेभ्योऽथ विनिवेद्यैवं पश्चाच्च स्वयमाचरेत् । इति ।

चतुर्भागं=चतुर्थभागम् । पिण्डसंयोजने विशेषस्तत्रैव—

दत्त्वा पिण्डमथाष्टाङ्गं ध्यात्वा तं च सुभास्वरम् ।
सुवर्णरूप्यदर्भैस्तु तस्मिन्पिण्डत्रये त्रिधा ॥
कृते पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् ।
सुवर्तुलांस्ततस्त्रींस्त्रीन्पिण्डान्कृत्वा प्रपूजयेत् ॥

अर्घ्यपुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः।
मुख्यं तु पितरं कृत्वा पुनरन्यान्यथाक्रमम् ॥ इति।

यदा पिता म्रियते पितामहो जीवति तदा प्रपितामहादिभिः सपिण्डनं कार्यम्।

मृते पितरि यस्याथ विद्यते च पितामहः।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यस्तु पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत्।
न देयो जीवते पिण्डः स च यस्मान्मृतो भवेत् ॥
पिण्डस्तु जीवतो हस्ते शिरश्छेदसमो भवेत् ॥

तथा—

मातर्यथ मृतायां च विद्यते च पितामही।
प्रपितामहीपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥

इति हेमाद्रिधृतब्रह्मपुराणात्। एवं प्रपितामहेऽपि जीवति तत्पित्रादिभिः कार्यम्। तदाह —

सुमन्तुः,

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने।

कृते इति शेषः।

पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥ इति।

यत्तु—

व्युत्क्रमाच्च मृतानां तु नैव कार्या सपिण्डता।

इति वचस्तन्मातृपितृभर्तृव्यतिरिक्तविषयम्।

व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते।
यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः ॥

इति पाराशरीये स्कान्दोक्तेः। यदा पितामहप्रपितामहयोर्द्वयोरेकस्यैव वा कर्त्रसन्निधानरूपप्रतिबन्धात्सपिण्डीकरणं न जातं स्वपितुस्तु द्वादशाहादिवर्षान्तपर्यन्तकालातिक्रमसम्भावनायां सपिण्डीकरणशून्येनापि पितामहादिना सह स्वपितरं संस्कुर्यात्।

असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥

इति कात्यायनोक्तेः । अयमर्थः। पूर्वौ=पितामहप्रपितामहौ। पापिष्ठमकृतसपिण्डनं न तु पातित्ये स्थितम्। "पापकर्मिणो न संसृजेरन्" इति गौतमोक्तेः। तादृशपितरं शुद्धेन=निर्वर्त्तित-सपिण्डीकरणेन, पापकृता=अनिवर्त्तितसपिण्डीकरणेन वा पितामहेन साकं शुद्धं सम्यक् संस्कुर्यादिति शास्त्रनिश्चय इति । तादृशाभ्यां सह मासिकाद्यपि कार्यम् ।

मातुः सपिण्डतां कृत्वा कुर्यान्मासामानुसिकम् ।

इति तेनैवोक्तत्वात् । इत्थं चाविशेषात्तादृग्भ्यां सह दर्शश्राद्धमपि स्यादेव । केचित्तु-

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने ॥
दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः ॥

इति वचनद्वयं पठन्ति । तस्यायमर्थः । द्वितियवचनं सुत-ग्रहणादाद्याब्दे दर्शश्राद्धादीनि सुत एव कुर्यान्नान्यो भ्रात्रादिः। भक्तिमत्त्वं तु कर्माङ्गतया प्राप्तमनूद्यते । अतः सुतेनैव पित्रोराद्याब्दे दर्शश्राद्धादिकं कार्यम् ।

यस्तु-

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः ॥

इति देवलवचनेन पित्र्यकर्मनिषेधः स वर्षान्तर्पयन्तं सपिण्डीकरणाकरणे बोध्यः ।

अथ स्त्रीणां वदामः ।

हेमाद्रौ शातातपः,

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम् ॥ इति ।

पक्षान्तरं तत्रैव स्मृत्यन्तरे—

मातुः सपिण्डीकरणं पत्या सार्धं विधीयते ।
यस्मात्पतिव्रतानां वै स एव गतिरिष्यते ॥

एवं सति सन्देहे व्यवस्था भविष्यत्पुराणे—

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम् ।
प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः ॥

तत्पित्रा=मातुः पित्रेत्यर्थः ।

लौगाक्षिरपि—

पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत् ।
पितरि म्रियमाणे तु तेनैवोपरते सति ॥ इति ।

अथ वा--

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

इत्यादिवचनैः स्वकुलपरम्परां विचार्य व्यवस्था बोध्या ।

सुमन्तुरपि—

एवं शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ! ।
उदितेऽनुदिते चैव होमभेदो यथा भवेत् ॥
तस्मात्कुलसमायातमाचारं च चरेद्बुधः । इति ।

अपुत्राविषये पैठीनसिः—

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥ इति ।

अन्वारोहणे तु पत्यैव सह नियतं सपिण्डनम् ।

मृता यानुगता नाथं सा तेन सहपिण्डताम् ॥
अर्हति स्वर्गवासं च यावदाभूतसम्प्लवम् ।

इति शातातपोक्तेः ।

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

इति यमोक्तेश्च । अत्र केचित्पतिवर्गेण सपिण्डनमाहुस्तदशुद्धम् । एकेनेत्यस्य वैयर्थ्यसम्भवात् । तस्मात्केवलभर्तृपिण्डेनैव संयोजयेत् । संयोजनं त्वसपिण्डीकृतभर्तृपिण्डेनैव कार्यम् । पूर्वोक्त-"असंस्कृतौ न संस्कार्यौ" इत्यादिवचनात्तथादृष्टत्वात्, पतिपिण्डसपिण्डनोत्तरमाद्यपिण्डस्य पतिपिण्डत्वाभावाच्च । यदा मृतस्य पुत्रवत्यौ द्वे भार्ये तयोर्मध्ये कनिष्ठयान्वारोहणे कृते ज्येष्ठः पुत्रः पितुरौर्ध्वदेहिकं कुर्यात् । अन्वारूढापुत्रः स्वमातुः पृथक्कुर्यात् । ज्येष्ठे तन्निरूपितपुत्रत्वाभावात् । सपिण्डनं तु तद्दिन एव दिनान्तरे वा पितृसपिण्डनोत्तरमेव कार्यम् । एवं बह्वीष्वपि बोध्यम् । यतीनां तु सपिण्डनं नास्ति ।

सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे तेषां पार्वणं तु विधीयते ॥

इत्युशनोवाक्यात् । सपिण्डने कामकालौ विश्वेदेवावित्यदर्शि प्राक् । मलमासेऽप्येतत्कार्यमेव ।

अधिमासे न कर्त्तव्यं श्राद्धमाभ्युदयं तथा ।
तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥

इति हारीतोक्तेः । सपिण्डीकरणप्रयोगस्त्वस्मन्मातुः पितामहभट्टश्रीनारायणपादपाथोजविरचितायामन्त्येष्टिपद्धतौ द्रष्टव्यः । मातुः श्राद्धादिकरणे गोत्रव्यवस्थामाह—

मार्कण्डेयः—

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ।

इति संक्षेपः ।

इति श्रीभारद्वाजमहादेवभट्टात्मजदिवाकरविरचितायां श्राद्धचन्द्रिकायां सपिण्डीकरणनिर्णयः ।

---

अथ विभक्ताविभक्तनिर्णयं ब्रूमः ।

मिताक्षरायां नारदः—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

मरीचिरपि—

बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः ।
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ॥
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ।

बृहस्पतिरपि—

एकपाके निवसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥
अविभक्तानामेकयज्ञानां ब्रह्मयज्ञादि पृथगेव भवति ।
पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् ॥
अग्निहोत्रं सुरार्चा च सन्ध्या नित्यं भवेत्तथा ॥

इत्याश्वलायनोक्तेः । यदा विभक्ताः संसृष्टा भ्रातरस्तदा ज्येष्ठ एव देवयज्ञादीन्कुर्यात् ।

होमान्नदानरहितं न भोक्तव्यं कदाचन ।
अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतम् ॥

इति व्यासवचनात्। संसृष्टेष्वित्युक्तत्वात्ताहशेष्वसंसृ-
ष्टेषु पृथगेव भवन्ति।

तथाचाश्वलायनोऽपि--

वसतामेकपाकेन विभक्तानामपि प्रभुः।
एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञपूर्वकान्॥
अविभक्ता विभक्ता वा पृथक्पाका द्विजातयः।
कुर्युः पृथक्पृथग्यज्ञान्भोजनात्प्राग्दिने दिने॥ इति।

पैठीनसिः—

विभक्तैस्तु पृथक्कार्यं प्रतिसम्वत्सरादिकम्।
एकेनैवाविभक्तेषु कृतं सर्वैस्तु तत्कृतम्॥

सपिण्डीकरणान्तानि श्राद्धानि विभागे सत्यप्यग्रज एव कु-
र्यात्। तथा च—

लघुहारीतः,

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश।
पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्॥ इति।

उशना अपि—

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥

सपिण्डनोत्तरं व्यासः,

अर्वाक् संवत्सरात् ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु।
ऊर्ध्वं सपिण्डीकरणात् सर्वे कुर्युः पृथक् पृथक्॥ इति।

एवं च सति द्वादशाहादिषु सपिण्डने क्रियमाणेऽनुमासि-
कोदकुम्भश्राद्धानि विभक्तानां पृथक् पृथग्भवन्ति। मघाश्राद्ध-
मविक्ता अपि पृथक्कुर्युरित्यदर्शि प्राक्। अविभक्तभ्रातॄणां यु-
गपत्तीर्थप्राप्तौ ज्येष्ठ एव तीर्थश्राद्धं कुर्वीत भेदेन प्राप्तौ भिन्नमेव।
एवं दर्शग्रहणयुगादिश्राद्धमविभक्तेषु ज्येष्ठस्यैव। केचित्तु--

अविभक्तेन पुत्रेण पितृमेधो मृताहनि।
देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च॥

इति यमवचनेन देशान्तरवासिनामविभक्तभ्रातृणां दर्श श्राद्धादिकं भिन्नं भवतीत्याहुः । आचारोऽपि शिष्टानामेवमेव । केचित्त्वस्य वचनस्य चिन्त्यत्वं प्राहुरिति दिक् ।

## अथ जीवत्पितृकस्य श्राद्धाधिकारः ।

कात्यायनः—

सपितुः पितृकृत्येषु अधिकारो न विद्यते ।

लौगाक्षिरपि—

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥ इति ।

क्रतुरपि—

अष्टकादिषु सङ्क्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोगतः ॥
जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाखिलम् । इति ।

काम्यम्—

रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान् ।
श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमम् ॥
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु मानवः ।

इति मार्कण्डेयादिवचनप्रणीतम् । पूज्ययोगतः=अलभ्ययोगनिमित्तकः । आदिना पिण्डपितृयज्ञग्रहणम् । अत एव पिण्डपितृयज्ञं प्रक्रम्य—

आपस्तम्बः—यदि जीवत्पिता न दद्यादाहोमात्कृत्वा विरमेदिति ।

केषुचिच्छ्राद्धेषु त्वधिकारो मैत्रायणीयपरिशिष्टे—

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

आन्वष्टक्यं=महालयान्तर्गतनवम्यां क्रियमाणं मातृश्राद्धम् । गयाप्राप्तिः प्रासङ्गिकी न बुद्धिपूर्विका ।

गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेत् ।

इति वचनात् । तच्च केवलं मातृवर्गस्यैव न तु मातामहादीनामपि । जीवत्पितुर्वृद्धिश्राद्धे तु षट्त्रिंशन्मते विशेषः ।

वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति ।

येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ इति ।

ताते सतीति तीर्थसन्न्यस्तपतितपदैः प्रत्येकं सम्बध्यते । तत्राद्याद्याभ्यां वैयधिकरण्येनोत्तराभ्यां सामानाधिकरण्येनेत्युक्तं श्राद्धमयूखे श्रीमातामहगुरुचरणैः ।

मनुः—

पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः ।

पितुः स नाम सङ्कीर्त्य कीर्त्तयेत्प्रपितामहम् ॥

इति शुभम् ।

## अथ तीर्थश्राद्धम् ।

जागर्त्ति सेतुर्भुवि भट्टनिर्मितस्तथापि किञ्चित्प्रवदामि भूयः ।
यात्राधिकारी कतमस्तु वर्णेष्वित्यादि सङ्क्षेपत एव सर्वम् ॥

तत्र—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ! ।

न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ॥

इति भारते व्यासवचनात्तीर्थयात्रायां चातुर्वर्ण्यस्याप्यधिकारः । तत्र पातिव्रत्यादिगुणवतीं पत्नीं विहाय गमने दोषमाह—

धर्मः,

पूतां पुण्यतमां भार्यां यो वा त्यक्त्वा प्रयाति हि ।

तस्य पुण्यफलं सर्वं वृथा भवति नान्यथा ॥ इति ।

कौर्मेऽपि—

सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः । इति ।

प्रायश्चित्तनिमित्तं गच्छति चेदपत्नीकोऽपि गच्छेत् ।

प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा।
यज्ञेष्वनधिकारी वा यश्च वा मन्त्रसाधकः॥

इति तत्रैवोक्तेः। स्कान्दे विधवाधर्मप्रकरणे—

स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः।

कुर्यादित्यग्रिमेणान्वयः। यत्तु मनुवचो—

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट्॥ इति,

तन्निरन्तरतीर्थयात्रादिनिषेधकम्। तथाच—

**शातातपः**—

निरन्तरं तीर्थसेवा सन्न्यासो मन्त्रसाधनम्।
देवताराधनं ध्यानं तेषां पापावहं परम्॥ इति।

प्रसङ्गेन तीर्थप्राप्तौ फलाल्पतेत्याहतुः—

**शङ्खपैठीनसी,**

तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत्।
स्नानजं फलमाप्नोति तीर्थयात्राकृतं न तु॥
अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति।
षोडशांशं स लभते यः परार्थेन गच्छति॥ इति।

तीर्थयात्रा च पद्भ्यां कार्यम्।

तीर्थानुगमनं पद्भ्यां तपः परमिहोच्यते।
तदेव कृत्वा यानेन स्नानमात्रफलं लभेत्॥

इति प्रभासखण्डात्। अशक्तेन यानमारुह्यापि गन्तव्यम्।

असमर्थस्तु यानेन तीर्थयात्रां समाचरन्।
तदुक्तं फलमाप्नोति स्वशक्त्या धर्ममाचरन्॥

इतिगोभिलोक्तेः। यानमुक्तम्—

**कूर्मपुराणे,**

नरयानं चाश्वतरीहयादिसहितो रथः।
तीर्थयात्रास्वशक्तानां यानदोषकरं नहि॥

अत्र केचित् "नौकायानमयानं स्यात्" इति वचनान्नौकायाने दोषाभावमाहुस्तत्तुच्छम्। यानेषु नौकाया अपि परिगणितत्वात्। अयानमिति तु नरयानवदनुकल्पसूचकम्। व्यवस्थापितं च सामान्यप्रघट्टके नावो यानत्वमस्मन्मातुः पितामहभट्टश्रीनारायणपदपाथोजैः। सोपानत्को व्रजेच्चेत्फलाल्पतेत्याह—

जाबालिः,

द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च।
यानमर्धं चतुर्थांशं छत्रोपानहमेव च॥
तस्मादेतैर्विहीनस्तु सर्वतीर्थफलं लभेत्। इति।

प्रथमतीर्थयात्रायां कालशुद्धिर्ग्रन्थगौरवभीत्येह नोक्ता सा जागरूकसामान्यप्रघट्टके द्रष्टव्या।

## अथ तीर्थयात्राविधिः।

उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च।
गणेशब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सुधीः॥

इति स्कान्दात् पूर्वदिनमुपोष्य द्वितीयेऽह्नि श्राद्धं कृत्वा गणेशादीन्नत्वा भुक्त्वा प्रस्थानं कुर्वीत। इदं च श्राद्धं घृतद्रव्यकं कार्यम्।

गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्यात्स सर्पिषा।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः॥

इति विष्णुपुराणोक्तेः। सामान्यप्रघट्टके भट्टपादास्तु घृतमुख्यकद्रव्येण कार्यमित्याहुः। उपवासात्प्राङ्मुण्डनं कुर्यात्।

प्रयागे तीर्थयात्रायां पितृमातृवियोगतः।
कचानां वपनं कुर्याद्वृथा न विकचो भवेत्॥

इति विष्णूक्तेः। इदं च वपनं प्रायश्चित्तार्थयात्रायामेव कार्यमिति केचित्। कार्पटिकवेषेणैव तीर्थगमने तदित्यन्ये। कार्पटिकवेषः कार्य इत्युक्तम्—

वायुपुराणे,

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः।
विधाय कार्पटीवेषं कृत्वा ग्रामं प्रदक्षिणम्॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः॥ इति।

केचित्तु गयामुपक्रम्यैवास्य विधानाद्गयायात्रायामेवैष कार्पटीवेषः कार्य इत्याहुः। सर्वतीर्थयात्रायामपीति श्रीभट्टपादाशयः। केचित्तु गयायात्राङ्गवपनं न कार्यमित्याहुः।

केशश्मश्रुनखादीनां वपनं न च शस्यते।
अतो न कार्यं वपनं गयाश्राद्धार्थिना सदा॥

इति महाभारतात्। (१)तीर्थं गच्छतोऽन्तरा पुण्यनदीप्राप्तौ विशेषः।

मार्गेऽन्तरा नदीप्राप्तौ स्नानादि परपारतः।
अर्वागेव सरस्वत्या एष मार्गगतो विधिः॥
स्थलान्तरे निवसतां न तु तत्तीर्थवासिनाम्। इति।

तत्रापि श्राद्धादि कार्यमेव। "अर्धं तीर्थफलं तस्य" इति प्रागुक्तवचनात्। गच्छतो मध्येमार्गमाशौचादिसम्भवे शुद्धिपर्यन्तं तत्र स्थित्वाग्रे गच्छेत्।

तीर्थं गच्छंश्चरेत्सन्ध्यास्तिस्र एकत्र मानवः।
नास्नातो नाशुचिर्गच्छेन्न भुक्त्वा न च सूतकी॥

इति सामान्यप्रघट्टके श्रीभट्टपादपाथोजधृतवचनात्।

---

(१) वायुपुराणे—गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ॥ इति।
अत्र गयाश्राद्धस्य यात्रापूर्वकत्वाद्गयायात्रैव न निषिद्धेति भावः। इत्यधिकं द्वितीयपुस्तके।

## अथ तीर्थप्राप्तौ ।

प्रभासखण्डे,

यानादि तु परित्यज्य भाव्यं पादचरैर्नरैः ।
लुठित्वा लोठनीं तत्र कृत्वा कार्पटिकाकृतिम् ॥ इति ।

लोठनीं लुठित्वा=साष्टाङ्गं प्रणम्येत्यर्थः । साष्टाङ्ग प्रणामस्तु—

पद्भ्यां कराभ्यां जानुभ्यां शिरसा चोरसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग उच्यते ॥ इति ।

अनन्तरं--

प्रथमं चालयेत्तीर्थे प्रणवेन जलं शुचिः ।
अवगाह्य ततः स्नायाद्यथावन्मन्त्रयोगतः ॥ इति ।

चालयेत्=स्पृशेत । मन्त्रस्तु—

तीक्ष्णदंष्ट्र ! महाकाय ! कल्पान्तदहनोपम ! ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम् ।
एतन्मन्त्रवत्स्नानं वपनोत्तरं कार्यम् ।
पूर्वमाप्लवनं तीर्थे मुण्डनं तदनन्तरम् ।
ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं समाचरेत् ॥
इति स्मृतेः ।

काशीखण्डे--

तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा । इति ।

नारदीयेऽपि--

तीर्थमासाद्य कुर्वीत नरः शुचिरुपोषणम् ।
उपवासाविशुद्धात्मा कर्तव्यं कर्तुमर्हति ॥ इति ।

अत्रेदं चिन्त्यते-मुण्डने किं वपनं करिष्ये कारयिष्ये इति वा संङ्कल्पः । तत्र केचिदाहुः वपनं कारयिष्ये इति सङ्कल्पोऽथवा वापनं करिष्ये इति न तु वपनं करिष्य इति । तदयुक्तम् ।

"वपनं यो न कारयेत्" "तस्मात्तान्परिवापयेत्" "प्रयागे वपनं कुर्यात्" इत्यादिरूपेण विधीनामुभयरूपत्वेऽपि

यानि कानि च पापानि ब्रह्महत्यासमानि च।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रलिङ्गाद्वपनं करिष्ये इत्येवं सङ्कल्पस्योचितत्वात्। मन्त्रलिङ्गबलात्प्रयोजकव्यापारस्यैव विवक्षितत्वाच्च। उपवास-कालः—

काशीखण्डे,

यदाह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे।
उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥ इति।

अनेन तीर्थप्राप्तिदिनात्पूर्वदिन उपोषणं नियतं प्राप्तं तत्—

उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रत !।

इति वचनेन विकल्पते। तस्मिन्नहनि=तीर्थप्राप्त्यहनि। केषु चित्तीर्थेषु मुण्डनोपवासौ निषेधति—

देवलः—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ इति।

मुण्डनं च—

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥

इति वचनप्रतीतपाठक्रमात्केशश्मश्र्वादिक्रमेण कार्यमिति केचित्। अस्मन्मातुः प्रपितामहचरणास्तु सेतौ श्मश्रुकूर्चयोरादौ वपने क्षणमपि म्लेच्छवेषकृता लोकविद्विष्टतापि न भवतीत्ययं पक्षो बहुमत इत्याहुः। वस्तुतस्तु पूर्वमतमेव युक्तम्। यत्र यत्र श्मश्र्वादिसाहित्येन वपनमाम्नातं तत्र प्रोक्तक्रमस्यापि विवक्षितत्वात्। अत एवाश्वलायनोक्ते गोदानव्रते—शुन्धि शिरो-मुखं मास्यायुः प्रमोषीः इति केशश्मश्रुलोमनखान्युदक्संस्थानि

कुर्वीत सम्प्रेष्यतीति सम्प्रेषणैव वपनानुष्ठानं दृश्यते सुधियाम् । प्रयागे सधवानामपीदं समूलं भवतीति श्रीभट्टपादाः । केचित्तु-

सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ।
एवमेव हि नारीणां शस्यते वपनक्रिया ॥

इति वचनादङ्गुलद्वयपरिमितिकेशच्छेदनरूपं प्राहुः । सन्न्यासिनस्तु तीर्थेऽपि ऋतुसन्धिष्वेव मुण्डनं कुर्युः ।

कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत् ।

इति स्मृतौ ऋतुसन्धिष्वेवेति परिसङ्ख्यानात् । शिखां वर्जयित्वेति कुटीचकाभिप्रायेणोक्तम् । परमहंसानां सशिखमेव वपनम् । कक्षोपस्थवर्जनमितरेषामपि समानम् । इदं च जीवत्पितृकेणापि तीर्थे कार्यम् । जीवत्पितृकाधिकारे—

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।
यो वापयति लोमानि स पुत्रः पितृघातकः ॥

इति स्मृत्या तीर्थादेः पर्युदस्तत्वात् । इदं च वपनं दशमासोर्ध्वं पुनस्तत्तीर्थप्राप्तौ कार्यं नान्तरा ।

संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनं चोपवासं च ततो यत्नेन कारयेत् ॥

इति स्मरणात् । द्विमासोनात्सम्वत्सरादित्यर्थः । क्वचित्स्पष्ट एव तादृशः पाठः । ऊर्ध्वमब्दाद्द्विमासोनादिति । ग्रन्थान्तरे—

मुण्डनं चोपवासं च गौतम्यां सिंहगे रवौ ।
कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥ इति ।

अत्र दशमासोर्ध्वं पुनस्तत्तीर्थप्राप्ताववश्यं मुण्डनादि कार्यम् । अन्तरा तु फलेच्छया भवति न तु नियमेनेति यत्नपदार्थः । एतत्प्रयागातिरिक्तसर्वतीर्थे । प्रयागे तु विशेषः ।

प्रयागे प्रतियात्रं तु योजनत्रय इष्यते ।
क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते ॥ इति ।

ततः स्नानम् । तीर्थे यमुद्दिश्य स्नानं क्रियते सोऽष्टमांशरूपं स्नानजं फलमाप्नोति । तथाच—

मार्कण्डेयपुराणे,

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः ॥ इति ।

पैठीनसिरपि—

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेच्च यमुद्दिश्य सोऽष्टभागं फलं लभेत् ॥ इति ।

तत्र मन्त्रः—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः स्वयम् ।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम् ॥ इति ।

इदं जीवतामेव । मृतानां तु तर्पणश्राद्धादिफलभाक्त्वेन जीवतामेव फलोद्देशस्योचितत्वात् । स्नानोत्तरं तर्पणश्राद्धे । तत्कालस्तु श्राद्धदेशनिरूपणे दर्शितः प्राक् । तीर्थश्राद्धं मलमासेऽपि कार्यम् ।

नित्यनैमित्तिके कुर्यात्प्रयतः स मलिम्लुचे ।
तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ॥

इति बृहस्पत्युक्तेः । तत्र देवताः—

ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्री स्त्रीतनयादितातजननीस्वभ्रातरः सस्त्रियः ।
ताताम्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

देवीपुराणे—

श्राद्धं च तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ।

भविष्ये—

आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ।

हेमाद्रावपि—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।

तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

अग्नौकरणमपि तीर्थश्राद्धे नेति स्मृतिरत्नावल्याम् ।

**पद्मपुराणे—**

तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥(१)

**शूद्रस्तु सर्वदामेनैव कुर्यात्**

सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।
न पक्वं भोजयेद्विप्रान्सच्छूद्रोऽपि कदाचन ॥
भोजयन् प्रत्यवायी स्यान्न च तस्य फलं भवेत् ।

इति **सुमन्तूक्तेः** । गयाश्राद्धं साङ्कल्पेन विधिना न भवेत् । पिण्डदानशून्यस्य तस्य फलाजनकत्वात् । अत एवोक्तं—

**हेमाद्रौ,**

आत्मजोऽन्योऽथवा कश्चिद्गयाकूपे वटेऽथवा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥ इति दिक् ।

पिण्डद्रव्याणि—

**देवीपुराणादिषु,**

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥ इति ।

**तीर्थश्राद्धे पिण्डप्रतिपत्तिर्विष्णुधर्मोत्तरे--**

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्त्तिता ॥ इति

---

(१) एतच्च गयाश्राद्धव्यतिरिक्ततीर्थविषयमात्रविधानम् । तत्र तन्निषेधात् । तथाच गालवः—

मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन न क्वचित् ॥

यत्तु भट्टपादैरुक्तमन्नासम्भवे आमेनापि कार्यम्, तदकरणात्मन्दकरणं श्रेय इत्यभिप्रायेण बोध्यम् । नैतत्सारम् । बलीयांसो निषेधा भवन्तीतिश्रुतिविरोधात् । इत्यधिकं पुस्तकान्तर ।

अत्र पूर्वोक्ता प्रतिपत्तिर्न भवति सदाशब्दग्रहणात् । तीर्थश्राद्धं जीवत्पितृकेणापि कार्यमित्युक्तं जीवत्पितृकाधिकारविचारे प्राक् । तथा विभक्तभ्रातॄणां युगपत्तीर्थप्राप्तौ ज्येष्ठ एव कुर्यात् । गयायां तु सर्वेऽविभक्ता अपि पृथक् पृथक् गयाश्राद्धमाचरेयुरित्यप्यन्यथापि प्राग्विभक्ताभक्तनिर्णये । गयायां ज्येष्ठोऽपि कनिष्ठाय श्राद्धपिण्डं दद्यात् ।

गयायां च विशेषेण ज्यायानपि समाचरेत् ।

इति बौधायनोक्तेः । अत्र गयापदं तीर्थमहालयादेरुपलक्षकं स्मृत्यन्तरात् । यत्तु—

न च माता न च पिता कुर्यात्पुत्रस्य पैतृकम् ।
न चाग्रजश्च कुर्वीत भ्रातॄणां च कनीयसाम् ॥

इति पितृकर्मणो ज्येष्ठानां निषेधः स कनिष्ठानां पुत्राद्यधिकारिसद्भावे और्ध्वदेहिकनिषेधपरो बोध्यः । अन्यथा तत्रापि न । पूर्वोक्त—"उत्सन्नबान्धवम्" इति सुमन्तुवचनान्महादोषश्रवणात् ।

श्राद्धमन्यद्वा सपुत्रा विधवा नैव कुर्यात् ।

सपुत्रया न कर्त्तव्यं भर्तुः श्राद्धं कदाचन ।

इति निषेधात् । यतिरपि न कुर्वीत—

न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम् ।
त्यक्तं सन्न्यासयोगेन गृहधर्मादिकं व्रतम् ॥
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ।

इति स्मृतेः । गयायां विशेषो—

वायवीये—

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥

स्पृष्ट्वेत्यन्तर्गतणिजर्थोऽयम् । स्पर्शयित्वेत्यर्थः ।

गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मुच्यते ॥

पितामहः--

चतुर्विधा भिक्षवस्तु विख्याता ब्रह्मणो मुखात् ।
कुटीचको बहूदको हंसश्चैव तृतीयकः ॥
चतुर्थः परमहंसश्च संज्ञाभेदैः प्रकीर्त्तिताः । इति ।

तत्र कुटीचकस्य वृत्तिमाह—

पराशरः,

कुटीचका नाम पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यभयादीन् हित्वा विधिवत्सन्न्यासं कृत्वा त्रिदण्डजलपात्रकाषायवस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मयज्ञध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं यात्रामात्रमुपयुञ्जानास्तस्यां कुट्यां नित्यं वसन्त आत्मानं मोक्षयन्त इति ।

यात्रामात्रं=प्राणसंरक्षणपरिमितम् । बहूदकस्यापि वृत्तिमाह-

पितामहः,—

बहूदकः स विज्ञेयः सर्वसङ्गविवर्जितः ।
बन्धुवर्गं न चेक्षेत स्वभूमौ नैव संविशेत् ॥

स्वभूमौ=स्वगृहे । हंसधर्मानाह स एव—

हंसस्तृतीयो विज्ञेयो भिक्षुर्मोक्षपरायणः । इति ।

परमहंसधर्माः स्कान्दे—

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
माधूकरमथैकान्नं परमहंसः समाचरेत् ॥ इति ।

एषूत्तरोत्तरस्य प्राशस्त्यं बोध्यम् । "यो यः पश्चात्स उत्तम" इति पितामहोक्तेः । अस्मिंश्चतुर्थाश्रमे ब्राह्मणस्यैवाधिकारो न क्षत्रियवैश्ययोः ।

चत्वारो ब्राह्मणस्योक्ता आश्रमा श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥

इति योगियाज्ञवल्क्यवचनात् ।

## अथ सन्न्यासाङ्गश्राद्धम् ।

सन्न्यासं चिकीर्षुः—

कुर्यात्कृच्छ्राणि चत्वारि सन्न्यासेप्सुरनाश्रमी ।
आश्रमी कृच्छ्रमेकं तु कृत्वा सन्न्यासमर्हति ॥

इति कात्यायनवचनादुक्तकृच्छ्रपूर्वकं सन्न्यसेत् । तिथ्यादि सङ्कीर्त्याशेषदुःखनिवृत्तिनिरतिशयानन्दावाप्तिद्वारा परमपुरुषार्थप्राप्तये परमहंसाश्रमाधिकारसिद्ध्यर्थं सन्न्यासमहं करिष्य इति सङ्कल्प्याचार्यं वृणुयात् । अथाष्टमीमारभ्य पौर्णमास्यन्तमथवा सन्न्यासात्पूर्वेद्युरेव देवादिश्राद्धाष्टकं कुर्यात् । देवर्षिदिव्यमनुष्यभूतपितृमात्रात्मनामिति अष्टौ श्राद्धानि । प्रथमं सत्यवसुसंज्ञकविश्वेदेवश्राद्धमन्ते मातामहश्राद्धं चेति द्वे श्राद्धे । एवं दश श्राद्धानि । सर्वत्र युग्मसङ्ख्याका ब्राह्मणा भवेयुः । अत्र च तिलकार्ये यवाः सर्वत्रोपवीतिता च ज्ञेया । तत्रायं प्रयोगक्रमः । विंशतिब्राह्मणानुपवेश्य समस्तसम्पदिति जपित्वा

अनुज्ञां प्राप्य युष्माकं सिद्धिं यास्यामि शाश्वतीम् ।
गर्भवासभयाद्भीतस्तथा तापत्रयात्तु वै ॥
गुहां प्रवेष्टुमिच्छामि परं पदमनामयम् ॥

इति प्रार्थ्य दण्डवत्प्रणम्य प्राङ्मुख उपविश्य देशकालौ निर्दिश्य सन्न्यासाङ्गभूतं नान्दीमुखं सदैवमष्टविधं श्राद्धं पार्वणविधानेन युष्मदनुज्ञयाद्य करिष्ये इति सङ्कल्प्याप उपस्पृश्य सत्यवसुसंज्ञकविश्वेदेवार्थं भवद्भ्यां क्षणः प्रसादनीय इति यथाक्रमं द्वौ द्वावनुमन्त्र्य देवश्राद्धे ब्रह्मविष्णुमहेश्वरार्थे भवद्भ्यां० ऋषिश्राद्धे देवर्षिब्रह्मर्षिक्षत्रियर्ष्यर्थे भवद्भ्यां० दिव्यश्राद्धे वसुरुद्रादित्यार्थे भवद्भ्यां० मनुष्यश्राद्धे सनकसनन्दनसनत्कुमारार्थे भवद्भ्यां० भूतश्राद्धे पृथिव्यादिपञ्चमहाभूतचक्षुरादीन्द्रियचतुर्विधभूतग्रामार्थे भवद्भ्यां० पितृश्राद्धे पितृपितामहप्रपिता-

महार्थे भवद्भ्यां० मातृश्राद्धे मातृपितामहीप्रपितामह्यर्थे भवद्भ्यां० आत्मश्राद्धे आत्मअन्तरात्मपरमात्मार्थे भवद्भ्यां० मातामहश्राद्धे मातामहमातुःपितामहमातुःप्रपितामहार्थे भवद्भ्यां० क्षणः प्रसादनीय इत्यक्षतोदकैः क्रमेण पाद्यादि दत्त्वा स्वपादौ प्रक्षाल्याचम्य क्रमेणोपविष्टानां सर्वेषां षष्ठ्यन्तेनासनानि दत्त्वा नान्दीश्राद्धे भवद्भ्यां क्षणः क्रियतामों तथा प्राप्नुतां भवन्ताविन्युक्त्वा प्राप्नुवावेति प्रत्युक्तो गन्धपुष्पधूपदीपाच्छादनानि दत्त्वा भोजनपात्राण्यासाद्यान्नं परिविष्य हस्ताभ्यां पात्रमालभ्य "पृथिवी ते पात्रम्" इत्यन्नस्पर्शं कृत्वा तत्र तत्र व्यवस्थितान् देवादीन् चतुर्थ्यन्तेनान्नाक्षतोदकमादाय स्वाहेति देवतीर्थेन सन्त्यज्य न ममेति ब्रूयात् । ततो ब्रह्मार्पणमुक्त्वानेन ब्राह्मणभोजनेन नान्दीश्राद्धदेवताः प्रीयन्तामित्युक्त्वा द्विजभोजनसमाप्तिपर्यन्तं विष्णुसूक्तानि जपेत् । भोजनान्ते नान्दीश्राद्धे पिण्डप्रदानं करिष्ये इति सङ्कल्प्य दक्षिणत आरभ्योदगपवर्गं नव लेखा लिखित्वा तासु क्रमेण प्रागपवर्गान् दर्भानास्तृणीयात् । ततः पञ्चसु स्थानेषु तूष्णीमक्षतोदकं, पितृमातृआत्ममातामहानां स्थानेषु शुन्धन्तां पितर इत्यादिनाक्षतोदकं दद्यात् । ततो देवादिपञ्चस्थानेषु तत्तन्नाम्ना प्रागपवर्गं पिण्डद्वयं दद्यात् ।

> एकैको मन्त्रवत्पिण्डो देयस्तूष्णीमथापरः ।
> सर्वमन्त्रेषु कर्तव्यं नान्दीमुखविशेषणम् ॥

इति वचनात् । पित्रादिचतुर्षु स्थानेषु स्वशाखोक्तविधिना पिण्डत्रयं कुर्यात् । जीवत्पितृमात्रादिवर्गकस्तान्परित्यज्य दद्यात् । ततः सम्पूज्य दक्षिणां दत्त्वा ब्राह्मणान्विसर्जयेत् । पिण्डानुद्धृत्य गवादिभ्यो दत्त्वा पुण्याहं वाचयित्वेष्टैः सह भुञ्जीत ।

इति सन्न्यासाङ्गश्राद्धप्रयोगः । विशेषस्त्वस्मन्मातुः प्र-

पितामहभट्टश्रीनारायणपदवाधोजविरचिते त्रिस्थलीसेतौ द्रष्टव्य इति दिक्।

अथात्यसमर्थस्य श्राद्धसिद्धिर्हेमाद्र्यादिधृतभविष्यविष्णुपुराणादिषु—

अग्निना वा दहेत्कक्षं श्राद्धकाले समागते।
तस्मिन्वोपवसेदह्नि जपेद्वा श्राद्धसंहिताम्॥
यथाशक्त्या तु दातव्यं श्राद्धकालसमागमे।

कक्षं=पर्वतदरीति हेमाद्रिः।

वृद्धवसिष्ठः—

किञ्चिद्दद्यादशक्तस्तु उदकुम्भादिकं द्विजे।
तृणानि वा गवे दद्यात्पिण्डान्वाप्यथ निर्वपेत्॥
तिलदर्भैः पितॄन्वापि तर्पयेत्स्नानपूर्वकम्। इति।

प्रचेताः—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः।
श्राद्धाहनि तु सम्प्राप्ते भवेन्निरशनोऽपि वा॥

वराहपुराणे—

सर्वाभावे वनं गत्वा स्कन्धमूलप्रदर्शकः।
कक्षामूलप्रदर्शक इति पाठान्तरम्।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति॥

न मेऽस्ति वित्तं न धनं च नान्यच्छ्राद्धोपयोगि स्वपितॄन्नतोऽस्मि।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य॥
इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम्।
यः करोति कृतं तेन श्राद्धं भवति भारत!॥ इति।

अत्र वृद्धिश्राद्धादिकं विस्तरभिया नोक्तं तन्निबन्धान्तरेऽवलोकनीयम्।

अथ सकलशिष्टवर्यपरिगृहीतो बह्वृचश्राद्धप्रयोगः।

उक्तनियमयुक्तः श्राद्धकर्त्ता श्राद्धदिने तिथ्यादि सङ्कीर्त्य

प्राचीनावीती अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगो· त्राणां वसुरुद्रादित्यस्वरूपाणामन्नेन हविषा पार्वणविधिना क्ष· याहश्राद्धं करिष्य इति सङ्कल्प्योपवीती पवित्रं बिभृयात् । तत्र मन्त्रः "पवित्रवन्तः परिष्कारभं" ततो ब्राह्मणान्निमन्त्रयेत । तत्र प्राङ्मुखमेकं द्वौ वा विश्वेदेवस्थाने उदङ्मुखमेकं त्रीन्वा पितृस्थाने । अस्मत्पित्रादीनां श्राद्धे पुरुरवार्द्रवसंज्ञकविश्वेदेवस्थाने त्वामहं निमन्त्रये दैवे क्षणः क्रियतामितिब्रूयात् । ॐ तथेतीतरः प्रति- ब्रूयात् । ततः कर्ता प्राप्नोतु भवान्प्राप्नवानीतीतरः । कर्ता प्राची· नावीती अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्रा· णां वसुरुद्रादित्यस्वरूपाणां स्थाने त्वां निमन्त्रये पित्र्ये क्षणः क्रियताम् । ततः कर्त्तोपवीती

अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥

इति पठित्वा श्राद्धाधिकारसिद्ध्यर्थं पुरुषसूक्तजपमहं करिष्ये ॐ सहस्रशीर्षा ऋ० १६ 'अतो देवाः' 'शुचीवो हव्या०' 'अपवि· त्रः पवित्रो वेति । ततो ब्रह्मदण्डार्थं सतिलकुशं ब्राह्मणाग्रे निधाय समस्तसम्पदिति श्लोकत्रयं पठित्वा प्रदक्षिणां कृत्वा प्राचीना· वीती पितृश्राद्धं कर्तुं ममाधिकारसम्पदस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्राद्धाधिकारसम्पदिति ब्राह्मणैरनुज्ञातो यज्ञोपवीती तिथ्यादि सङ्कीर्त्य दक्षिणामुखः प्राचीनावीती सव्यं जान्वाच्यास्मत्पित्रादीनां पूर्वोपक्रान्तं श्राद्धं युष्मदनुज्ञया सद्यः करिष्ये, कुरुष्व, उपवीती स्वागतं सुस्वागतम् ।

आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

मया निमन्त्रिताः पूर्वं पितरो ये महाबलाः।
आश्रित्य पितृकार्याणि सावधाना भवन्तु ते॥

इति जपित्वा प्राङ्गणादौ देवपाद्यार्थं चतुरस्रं मण्डलं निहितगन्धपुष्पयवकुशं प्रादेशमात्रं दक्षिणे षडङ्गुलस्थानं त्यक्त्वा पितृपाद्यार्थं प्रादेशमात्रं वर्त्तुलं मण्डलं निहितगन्धपुष्पतिलकुशं गोमयेन विधाय स्वयं प्रत्यङ्मुखः प्राङ्मुखं वैश्वदेविकद्विजमुपवेश्य तत्पादौ मण्डले निधाय नमोऽस्त्वनन्तायेति सम्पूज्य पुरूरवार्द्रवसंज्ञका विश्वदेवा इदं वः पाद्यमिति देवतीर्थेन पाद्यं दत्त्वा पवित्रं निष्काश्य शन्नोदेवीरितिमन्त्रेण पादौ प्रक्षाल्य प्राचीनावीती दक्षिणमण्डले पित्राद्यर्थं ब्राह्मणमुदङ्मुखमुपवेश्य तथैव सम्पूज्यास्मत्पितृपितामहप्रपितामहाः अमुकशर्माणोऽमुकगोत्रा वसुरुद्रादित्यस्वरूपा इदं वः पाद्यमिति घृताक्तपादयोः पाद्यं दत्त्वा पुनः पवित्रं निष्काश्य शन्नोदेवीरितिपादौ प्रक्षाल्य तदपो मूर्ध्नि धृत्वोपवीती पवित्रं विसृज्य मण्डलोत्तरतो ब्राह्मणान्द्विराचम्य स्वयं च द्विराचम्य भोजनस्थाने प्राङ्मुखं वैश्वदेविकब्राह्मणं भूर्भुवः स्वः समाध्वमिति हस्तपादायोपवेश्य प्राचीनावीती पित्राद्यर्थमुदङ्मुखं ब्राह्मणं तथैवोपवेश्योपवीती

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वाहायै स्वधायै नित्यमेव नमोनमः॥

इति त्रिर्जपित्वा तिथ्यादि सङ्कीर्त्य प्राचीनावीती अस्मत्पितृपितामहप्रपितामहानामित्याद्युक्त्वा सदैवं सपिण्डं पार्वणविधिना क्षयाहश्राद्धं युष्मदनुज्ञया सद्यः करिष्ये, कुरुष्वेति तैरुक्तः। अहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु अन्यत्रेतो गच्छन्तु यत्रैतेषां गतं मन इति तिलानवकीर्य 'उदीरतामवरः पितरो हवेष्विति गायत्रीं च जपित्वा दर्भाम्भसान्नानि सम्प्रोक्ष्य सर्वे पाकाः शुचयः श्राद्धयोग्या भवन्तु दुष्टदृष्टिदोषा-

क्षुपहतिर्नश्यतु उपहाराणां पवित्रतास्तु तथास्त्विति तैरुक्ते ।

श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तते ॥

प्रवर्त्तयेति तैरनुज्ञातो देवार्चनं कुर्यात् उत्तरामुखः । अपो दत्त्वा पुरूरवार्द्रवसंज्ञकाविश्वदेवस्थाने क्षणः क्रियताम् । ॐतथा प्राप्नोतु भवान् आप्नवानि अपो दत्त्वा युग्मान्सयवान्कुशान्पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनमितिदक्षिणतो दद्यात् । आस्यतां धर्मोऽसाविति प्रत्युक्त अपो दत्त्वाऽर्घ्यानासादयेत् । भुवि प्रागग्रान्दर्भानास्तीर्य तेषु न्यग्बिलमुदक्संस्थं पात्रद्वयं निधायाभ्युक्ष्योत्तानीकृत्य तदुपरि द्वौ द्वौ कुशौ प्रागग्रौ निधाय तस्मिन्नप आसिच्य शन्नोदेवीरभिष्टय इति सकृदनुमन्त्र्य ।

यवोसि धान्यराजो वा वरुणो मधुसंयुतः ।
निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ॥

इति प्रतिपात्रं मन्त्रावृत्त्या यवानोप्य गन्धपुष्पाणि प्रक्षिप्य देवपात्रे सम्पन्ने सुसम्पन्ने इति अभिमृष्य पुरूरवार्द्रवसंज्ञकान्विश्वान्देवान्भवत्सु आवाहयिष्ये इति वैश्वदेविकद्विजं पृष्ट्वा आवाहयेत्यनुज्ञातः विश्वदेवास आगतशृ० निषीदतेति ऋचं पठन् विप्रदक्षिणजानु वामहस्तेन गृहीत्वा विप्रस्य दक्षिणपादादिमूर्धान्तं यवान्विकिरेत् । ततो 'विश्वदेवाः शृणुतेमं हवं मेये० बर्हिषिमादयध्वम्, 'आगच्छन्तु महाभागा० भवन्तु ते'इत्युपस्थाय पुरूवार्द्रवसंज्ञकाविश्वेदेवाः स्वाहार्घ्याः सन्त्वर्घ्या इत्युक्ते अपो दत्त्वा पात्रस्थं कुशद्वयं विप्रकरे प्रागग्रं दत्त्वा वामहस्तगृहीतार्घ्यपात्रजलं दक्षिणपाणिना देवतीर्थेन पुरूरवार्द्रवसंज्ञका विश्वेदेवा इदं वोऽर्घ्यमिति दद्यात् । अस्त्वर्घ्यमिति प्रत्युक्तस्ता अपः यादिव्या आपः पृथिवीसम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्तान आपः शंस्यानो भवन्तु इत्यनुमन्त्र्यापो दत्त्वा पुरूरवा-

द्रवसंज्ञका विश्वेदेवा असौ वो गन्धाः स्वाहा नमो न मम सुगन्धाः पुरूरवा० इमानि पुष्पाणि स्वा०सु०पुरूरवा० एष वो धूपःस्वाहा० सुधू० पुरू० एष वो दीपः स्वा० सुदी० पुरू० इदं वः आच्छादनार्थे वस्त्रं स्वा० युवासुवासाःपरिवी०सादेवयन्तःस्वाच्छादनं च। एतेऽत्र गन्धपुष्पधूपदीपाच्छादनान्ताः पञ्चोपचाराः सम्पूर्णा भवन्तु। अर्चनविधेर्न्यूनातिरिक्तं विधिवदस्तु "यस्य स्मृत्या च० तमच्युतम् 'प्रमादात्कुर्वतां, तिश्रुतिः, विष्णवे नमः ३। ततो युष्मदनुज्ञया पित्राद्यर्चनं करिष्ये इति सङ्कल्प्य प्राचीनावीती दक्षिणास्यः अपो दत्त्वास्मत्पितृस्थाने क्षणः क्रि० अस्मत्पि०नामिदमासनमिति वामभागे दद्यात्। आस्यतां पूर्ववदाग्नेयीसंस्थमर्घ्यपात्रत्रयमासाद्य तदुपरि त्रींस्त्रीन्कुशान्संस्थाप्य तत्र जलमापूर्य शन्नोदेवीरिति सकृदनुमन्त्र्य प्रत्यर्घ्यं तिलोऽसिसोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमान्लोकान्प्रीणयाहि नः स्वधा नम इतितिलान्दत्त्वा गन्धादि च प्रक्षिप्य पितृपात्राणि सम्पन्नानि सुसं०अस्मत्पितृपितामहप्रपितामहान् अमुकशर्मणोऽमुकगोत्रान्वसुरुद्रादित्यस्वरूपान्भवत्स्वावाहयिष्ये अवाहयेति तैरनुज्ञातः उशन्तस्त्वानिधी० षेअत्तवे इति मूर्धादिपादपर्यन्तं तिलान्विकिरेत्। तत आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानित्युपस्थायापो दद्यात्। बहुब्राह्मणपक्षेऽप्युपस्थानमावाहनोत्तरं सकृदेव। उपवीती अस्मत्पितृपितामहप्रपितामहा अमु० वसुरुद्रादित्यस्वरूपाः सम्पादिता वः स्वधार्घ्याः अस्त्वर्घ्याः पात्रस्थान्दर्भान्ब्राह्मणहस्ते निधाय वामकरसङ्गृहीतेन दक्षिणहस्तेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यम् इति पितृतीर्थेन दत्त्वा "या दिव्या" इति स्रवन्तीरपोऽनुमन्त्र्यापो दत्त्वा पितामहप्रपितामहपात्रशेषं पितृपात्रे निक्षिप्य ब्राह्मणहस्तदत्तकुशैः

पितृपात्रमाच्छाद्य पुत्रकामनायां तज्जलेन मुखमङ्क्त्वा पितृभ्यः स्थानमसीति मन्त्रेणोत्तरतो न्यग्बिलमासादयेत् । ततः प्राचीनावीती अपः प्रदाय विश्वेदेववद्गन्धाद्याच्छादनान्तं पित्रर्चनं(१) विधायैतेऽत्र गन्धेतिपूर्ववद्देवोक्त्वा पात्रासादनं कुर्यात् । तत्रादौ यज्ञोपवीती वैश्वदेविकद्विजभोजनस्थाने गोमयादिना नैर्ऋतीं दिशमारभ्यैशानीपर्यन्तं प्रादाक्षिण्येन पुनर्नैर्ऋतीमारभ्यैशानीपर्यन्तं चतुरस्रं मण्डलं यवकुशयुतं विधाय तत्र भोजनपात्राण्युपपात्रसहितान्यासाद्य प्राचीनावीती पित्र्यर्थद्विजभोजनस्थाने ऐशानीमारभ्य नैर्ऋतीपर्यन्तमप्रादक्षिण्येन पुनरैशानीमारभ्य नैर्ऋतीपर्यन्तं वर्त्तुलं मण्डलं तिलकुशयुतं विधाय पात्राण्यासाद्य रक्षोनिबर्हणार्थं पात्रसमन्ततो भस्मपरिधिं कुर्यात् । तत्रादौ दैवे उपवीती "पिशंगमृ०ईय" इति विप्रवामहस्तमारभ्य भोजनपात्रस्य परिधिं कृत्वा प्राचीनावीती पैत्रे "रक्षाणोअग्नेतव० द्वाद्धधानं" इति विप्रदक्षिणहस्तमारभ्य भोजनपात्रस्य परिधिं कृत्वा उपवीती आचम्य देवद्विजकरशुद्धिं विधाय प्राचीनावीती पितृद्विजकरशुद्धिं विधायाग्नौकरणं कुर्यात् । तद्यथा विप्रपाणावग्नौकरणं करिष्ये कुरुष्वेत्यभ्यनुज्ञातोऽवदानधर्मेणान्नमादाय विप्रपाणौ 'सोमाय पितृमते स्वधा नमः सोमाय पितृमत इदं न मम' 'अग्नये कव्यवहानाय स्वधा नमः अग्नये कव्यवाहनायेदं न मम' ततो घृतेन पात्रमभिघारयेत् । उ० दैवे "मूर्धानं दिवो अरतिं० यन्तदेवाः" प्रा० पैत्रे "आमासुपक्वमै०णसेबृहत्" तत

(१) अर्चनं च—

अपवित्रकरे गन्धैर्गन्धद्वारेति पूजयेत् ।
गन्धद्वारेति वै गन्धं मायनेत्येव पुष्पकम् ॥
धूरसीत्यधुना धूपमुद्दीप्यस्वेति दीपकम् ॥
युवं वस्त्राणि मंत्रेण वस्त्रं दद्यात्प्रयत्नः ॥

इति श्राद्धसङ्ग्रहोक्तप्रकारेण ।

उपवीती स्वयं पत्न्यादिना वान्नं देवपूर्वं परिविष्याग्नौकरणशेषान्नं पित्रादिपात्रेष्वेव दत्त्वा देवपात्रं गायत्र्याभ्युक्ष्य तूष्णीं परिषिच्य न्यङ्मुखेनोपरिस्थितेन सव्येन पाणिना पात्रमालभ्य "पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृतेऽमृतं जुहोमि स्वाहा ब्राह्मणानां त्वाविद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिंल्लोके" इत्यभिमन्त्र्य "इदं विष्णुर्वि० पांसुरे" विष्णो हव्यं रक्षस्वेति विप्राङ्गुष्ठमूलमन्ने निवेश्य यवोदकमादायात्र पुरूरवार्द्रवसंज्ञकाविश्वेदेवा देवता इदमन्नं हविरयं ब्राह्मण आहवनीयार्थे इयं भूमिर्गया अयं भोक्ता गदाधर इदमन्नं ब्रह्मेदं सौवर्णपात्रमक्षय्यवटच्छायेयं पुरूरवा० विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा हव्यं न मम इति दक्षिणभागे जलं क्षिपेत् । "ये देवासो दिव्ये० यज्ञमिमं जुषध्वं नमो देवेभ्यः" इत्युपस्थाय प्राचीनावीती सव्यं जान्वाच्य पितृपात्रस्थमन्नं गायत्र्याभ्युक्ष्य तूष्णीं परिषिच्योत्तानेनाधःस्थितेन दक्षिणेनाधोमुखेनोपरिस्थितेन सव्येन पितृपात्रमालभ्य पूर्ववत् पृथिवीत इत्यादि कुर्यात् । तत्रायं विशेषः। यवोदकस्थाने तिलोदकं, स्वाहास्थाने स्वधा, हव्ये कव्यं, सौवर्णे राजतं, पुरूरवार्द्रवस्थाने पितृपितामहप्रपितामहा देवताः, विश्वेभ्यो देवेभ्य इत्यस्मिन्स्थाने पितृपितामहप्रपितामहेभ्योऽमुकशर्मभ्योऽमुकगोत्रेभ्यो वसुरुद्रादित्यस्वरूपेभ्य इति "ये चेह पितरो० कृतं जुषस्व" इत्युपस्थायोपवीती "ब्रह्मार्पणं ब्रह्महविः समाधिना" "हरिर्दाताह० पतेहरिः" "चतुर्भिश्चचतु० प्रसीदतु" येषामुद्दिष्टं तेषामक्षय्या तृप्तिरस्तु तत्सद्ब्रह्मार्पणमस्तु "एको विष्णुर्महद्भूतं० भुगव्ययः" अनेन ब्राह्मणभोजनेनास्मत्पितृपितामहप्रपितामहस्वरूपी जनार्दनवासुदेवः प्रीयताम् ॥

ईशानविष्णुकमलासनकार्त्तिकेय-
वह्नित्रयार्करजनीशगणेश्वराणाम् ॥

क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां
पादान्नमामि सततं पितृमुक्तिहेतून् ॥ इति ।

सव्याहृतिकां गायत्रीं मधुमतीश्च जपित्वा मध्विति त्रिरुक्त्वा पितृदेवान्ध्यात्वा अपोशानार्थमुदकं दत्त्वा बलिदानवर्जममृतोपस्तरणमसीति विप्रैस्तस्मिन्पीते कर्ता प्राणाहुतिमन्त्रान् पठेत् । श्रद्धायां प्राणे(१) निविष्टो ऽमृतं जुहोमि शिवोमाविशाप्रदाय प्राणाय स्वाहा एवं सर्वत्रोक्त्वान्ते यथासुखं जुषध्वमिति वदेत् । ततः—

अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षितम् ।
उपविश्य सुखेनैव भोक्तव्यं वश्यमानसैः ॥

इति सम्प्रार्थ्य यथाशक्ति गायत्रीजपपूर्वकं श्राद्धसूक्तानि पठेत् । ततो भोजनान्ते पुरूरवा० देवाः तृप्ताः स्थ प्राचीनावीती अस्मत्पित्राद्याः सर्वे पितरः तृप्ताः स्थ तृप्ताः स्म इत्युक्तो "मधुव्वाता ऋ०" ३ "अक्षन्नमीमदं०"१ श्राद्धं सम्पपन्नम्? सुसम्पन्नम्। शेषमन्नं किं क्रियतामिष्टैः सह भुज्यतामिति श्रुतप्रतिवचनउत्तरापोशनं दत्त्वाऽचान्तेषु विप्रेषु पिण्डदानं कुर्यात् । तद्यथा द्विजोच्छिष्टान्तिके भूमिं प्रोक्ष्य कृतापसव्यः पितृप्रीत्यर्थं पिण्डदानं करिष्ये। उपवीती "अपहता असुरा रक्षांसि वेदिषद"इत्याग्नेयीसंस्थां लेखां स्फ्येन कुशमूलेन वोल्लिख्याद्भिस्तामभ्युक्ष्य दक्षिणाग्रैः सकृदाच्छिन्नैर्दर्भैराच्छाद्याग्नौकरणशेषसम्मिश्रेण श्राद्धान्नेन कपित्थप्रमाणान् दृढान्पिण्डान्कृत्वा प्राचीनावीती शुन्धन्तां पितरः शुन्धन्तां पिता० शुन्धन्तां प्र० हा इति कुशेषु तिलोदकं दत्त्वा पिण्डमादाय एतत्ते अस्मत्पितः अमुकशर्मन् अमुकगोत्र वसुरूप ये च त्वामत्रानु इति पितृतीर्थेन कुशोपरि पिण्डं निधायास्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपायायं पिण्डः

(१) प्राणेन विष्णो इति पाठः पुस्तकान्तरे ।

स्वधा नमो न मम ये च त्वामत्रानु तेभ्यश्च गयायां श्रीरुद्रपादे दत्तमस्तु तथा पितामहप्रपितामहाभ्यां दत्त्वा कुशमूले हस्तं निमृज्य "अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्"इत्यनुमन्त्र्य सव्यमुदङ्ङावृत्य यथाशक्ति प्राणानायम्य तथैव पुनः पर्यावृत्य "अमीमदन्तपितरोयथाभागमावृषायिषत"इति पुनरनुमन्त्र्य उपवीती पिण्डशेषमाघ्राय हस्तं प्रक्षाल्याचम्य प्राची० पिण्डेषु तिलोदकं शुन्धन्तां पितर इत्यादिभिर्दत्त्वा पिण्डपात्रं न्यग्बिलं कृत्वा अस्मत्पितः अमुकशर्म० अभ्यङ्क्ष्व अस्मत्पिताम० अ० अस्मत्प्र० अ० इति तैलं पिण्डेषु निक्षिप्य तथैवाञ्जनमङ्क्ष्वेति दत्त्वा एतद्वः पितरो वासो मानोतोऽन्यत्पितरो युङ्ध्वमिति दशासूत्रं तेषु दद्यात् । कुलाभिवृद्ध्यर्थं सव्येन पिण्डपूजां करिष्ये इति सङ्कल्प्य पिण्डसंस्थेभ्यः पितृभ्य इति मन्त्रेण पिण्डान्सम्पूज्य नमस्कृत्य प्राचीनावीत्युपतिष्ठेत नमो वः पितर इषे नमोवः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवावो जीवं त इह सन्तः स्याम मेनान्त्वाहुत्वामह इति तिसृभिश्चोपस्थाय परेतनपितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत इत्याग्नेय्यां प्रतिपिण्डान्प्रवाह्य पिण्डानुद्वासयिष्ये इत्युक्त्वा तद्विष्णोरिति पिण्डान् जलादौ क्षिप्त्वा पिण्डस्थाने शान्तिरस्त्विति जलं प्रोक्ष्य विकिरं दद्यात् । उपवीती आदौ वैश्वदेविकब्राह्मणसन्निधौ प्रोक्षितभूमौ कुशोपर्यन्नमादाय "असोमपाश्च ये देवा० श्वदेविकं" इति मन्त्रेण निक्षिपेत् । ततः प्राची० "असंस्कृतप्रमीतायेत्या०भ्यश्च पैतृकमिति तथैव पितृद्विजसन्निधौ दत्त्वोच्छिष्टपिण्डं दद्यात् । विप्रोच्छिष्टाग्रे दक्षिणाग्रकुशेषु "ये

अग्निदग्धाये०न्वं कल्पयस्व" इति पिण्डं क्षिप्त्वा—

ये ऽग्निदग्धाः कुले जाता येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इत्यनेन मन्त्रेण तन्मूर्ध्नि तिलांबु निषिञ्चेत् । तत आचम्य पवित्रं त्यक्त्वा सपवित्रकरो देवद्विजहस्ते सुप्रोक्षितमस्तु, अस्तु सुप्रोक्षितम् । शिवा आपः सन्तु, सन्तु शिवा आपः। सौमनस्य-मस्तु, अस्तु सौमनस्यम् । अक्षतं चारिष्टं चास्तु, अस्त्वक्षतमरिष्टं च। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु, अस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्च एवमपसव्येन पितृब्राह्मणहस्तेष्वपि कृत्वा अघोराः पितरः सन्तु सन्त्वघोराः पितरः अमुकशर्माहम-भिवादये । उपवीती अस्मद्गोत्रं वर्धतां स्वस्ति वर्धतां गोत्रम् । तानक्षतान् शिरसि धृत्वा भोजनोच्छिष्टभाजनानि चालयित्वाचम्य पुरू० देवेभ्यः स्वस्तीति ब्रूतामिति यवोदकं देवद्विजहस्ते दत्त्वा स्वस्ति इत्युक्ते प्राचीनावीती अस्मत्पितृपितामहेभ्यः स्वस्तीति० उपवीती पुरू० देवानां यद्दत्तं श्राद्धं तदक्ष-य्यमस्तु अस्त्वक्षय्यम् । प्राची० अस्मत्पितृ० स्वरूपाणां यद्दत्तं श्रा० ततः प्रथमं न्युब्जपात्रमुत्तानं कृत्वोपवीती अ-स्मत्पितृपितामहप्रपितामहस्थाने उपविष्टब्राह्मणेभ्यः श्राद्धसाद्गु-ण्यार्थं यथाशक्ति रजतं दक्षिणात्वेन सम्प्रददे दक्षिणाः पान्तु पान्तु दक्षिणाः पुरू० उपविष्टाय ब्राह्मणाय यथाशक्ति सुवर्णं दक्षिणां० । स्वधां वाचयिष्ये वाच्यतां अस्मत्पितृपितामहेभ्यो यथानामगोत्रेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः स्वधोच्यतां अस्तु स्वधा स्वधा सम्पद्यन्तां सम्पद्यन्तां स्व० विश्वेदेवाः प्रीयन्तां प्रीयन्तां विश्वेदेवाः पितरः प्रीयन्तां पितरः स्वस्तीति पिण्डदेशे तिलान्विकीर्य शान्तिरस्त्विति जलं क्षिप्त्वा वाजेवाजेवसिष्ठो-ऽग्निजनस्त्रिष्टुप् श्राद्धविसर्जने विनियोगः । "वाजेवाजेवत०

वयानैः" उत्तिष्ठत पितरो विश्वेदेवैः सहेति कुशेन विप्रहस्तं स्पृशन्नामावाजस्य प्रसवो जगम्यादा०त्वायगम्यादिति विप्रप्रदक्षिणां कृत्वा विप्रहस्तेष्वक्षतपुष्पाणि दत्त्वा प्रार्थयेत् "दातारो नो० ष्मकंचन" ततो ब्राह्मणाः दातारो वोऽभिवर्धन्तां वेदाः सन्ततिरेव च श्रद्धा च वो माव्यगमद्बहुदेयं च वोऽस्तु अन्नं च वो बहु भवेदतिथींश्च लभध्वं याचितारश्च वः सन्तु मास्मयाचिष्ट्वं कश्चन इत्याशिषं दद्युः। "स्वादुषं सदः पितरो०अघशंसईशत" इहैवस्तममाविर्यौष्टंवि०गृहे"।

आयुः प्रजा धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः॥

एताः सत्या आशिषः सन्त्विति पठित्वा तानक्षताञ्शिरसि क्षिप्त्वा—

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात्।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम्॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ॥
इत्याभ्यां मन्त्राभ्यां विप्रपादानुपस्पृश्य प्रणम्य च—
मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः!।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम॥

इतिप्रार्थयेत्। ततः सम्पूर्णमस्त्विति तैरुक्ते 'यस्य स्मृत्ये'ति पठित्वानेन श्राद्धकर्मणास्मत्पितॄणामक्षय्या तृप्तिरस्तु गयाकृतश्राद्धफलमस्त्विति विप्राः वसिष्ठासः पितृवद्वा०ऋग्भिः सदानः इदं पितृभ्योन०स्तव्यं आसीमान्तमनुव्रज्य वैश्वदेवं कृत्वा इष्टैः सह भुञ्जीत। द्वितीयदिने श्राद्धाङ्गतर्पणं कुर्यात्।

इति श्राद्धप्रयोगः।

इदानीं केवलगृह्याग्निमतः पिण्डपितृयज्ञव्यतिरिक्तदर्शश्राद्ध-

प्रयोगोऽभिधीयते । तत्र गृह्यपरिशिष्टे—आहिताग्निः पिण्ड-पितृयज्ञं कृत्वा करोत्यनाहिताग्निस्तु तदितरेण व्यतिषज्यते यथादौ पितृयज्ञो यावदिध्माधानादथ पार्वणं ब्राह्मणपच्छौचादा-च्छादनान्तं पुनः पितृयज्ञ आमेक्षणानुप्रहरणात्पुनः पार्वणमातृ-प्तिज्ञानादथोभयशेषं क्रमेण समापयेदित्येष व्यतिषङ्ग इति ।

अथ प्रयोगः ।

गृह्याग्निमान् चतुर्दश्यां सायंहोमानन्तरममायामेव वा प्रातर्होमानन्तरं यथासामर्थ्यं ब्राह्मणान्निमन्त्र्य ता-नाकार्य स्नातो धृतपवित्रः प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीत्यन्वाचितसव्यजानुः पितृपितामहप्रपितामहानां सप-त्नीकानां मातामहमातुःपितामहमातुःप्रपितामहानां सपत्नी-कानां पार्वणश्राद्धं पिण्डपितृयज्ञं च व्यतिषङ्गेण करिष्य इति सङ्कल्प्य ब्राह्मणनिमन्त्रणादिद्वितीयसङ्कल्पान्तं कृत्वा विप्रान्सं-न्निधाप्यौपासनाग्निं प्रज्वाल्याग्नेय्यभिमुखोऽग्निं ध्यात्वाग्नेयीमार-भ्याप्रदक्षिणं सकृत्परिसमुह्याग्नेय्यग्रकैर्दर्भैरप्रदक्षिणं परिस्तीर्य तथैव पर्युक्ष्याग्नेरैशान्यां वायव्यां वाग्नेय्यग्रान्कुशानास्तीर्या-भ्युक्ष्य तत्र चरुस्थालीशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनस-कृदाच्छिन्नं बर्हिरिध्ममेक्षणकमण्डल्वाख्यानि पात्राणि न्यग्बि-लान्येकैकश आग्नेयीसंस्थान्यासाद्योत्तानानि कृत्वा कमण्डलुज-लेन तानि प्रोक्ष्य गृहीतचरुस्थालीशूर्पोऽग्नेर्दक्षिणतः स्थितः व्रीहिमच्छकटं दक्षिणत आरुह्य शूर्पे निहितां स्थालीं व्रीहिभिरा-पूर्य यथास्थालीमुखप्रदेशाद्व्रीहयः शूर्पे निपतन्ति तथा ता निमृज्य स्थालीमुखप्रदेशतः पतितान्व्रीहीन् शकटे प्रास्याग्नेः पश्चिमदेशे वायव्यग्रीवमास्तीर्णे कृष्णाजिने उलूखलं निधाय तत्र स्थालीस्थान्व्रीहीन्निधायाग्नेय्यभिमुख्या तिष्ठत्या पत्न्यावह-तान्सकृत्फलीकृतान् विविच्य सकृत्प्रक्षालितान् जीवतण्डुलान्

श्रपयित्वा चरुमनुद्वास्यैवाग्नेरेकतः प्रदीप्तमुल्मुकं गृहीत्वाग्नेराग्नेय्यां दिशि कृते शुचिस्थण्डिले ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः । स्वधयाचरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकान्प्रणुदात्वस्मादित्यतिप्रणीताख्यमग्निं निधायाग्नेय्यग्रैः कुशैः परिस्तीर्याग्नेय्यभिमुखोऽतिप्रणीतौपासनयोर्मध्ये सव्योत्तरपाणिद्वयविधृतेन स्फ्येन दर्भमूलेन वाग्नेयीसंस्थं लेखाद्वयमावृत्तेनापहता असुरा रक्षांसि वेदिषद इति मन्त्रेणोल्लिख्य तदद्भिरभ्युक्ष्य सकृदाच्छिन्नबर्हिर्द्वयेनाच्छाद्य विलापितानुत्पूताज्यपूर्णां ध्रुवामग्नेर्दक्षिणतो दर्भेष्वासाद्य संमृष्टेन स्रुवेण ध्रुवाज्यमादाय चरुमभिघार्योदगुद्वास्यातिप्रणीताग्नेः पश्चिमतः कुशेष्वासाद्य तद्दक्षिणतोऽभ्यञ्जनाञ्जनकशिपूपबर्हणान्यासादयेत् । ततः स्वागतप्रश्नादि पात्राणामभितो भस्मक्षेपान्तं पार्वणं कृत्वा पितृयज्ञचरोरन्नमुद्धृत्य घृताक्तं कृत्वा प्राचीनावीत्यग्नौ करिष्ये इति पित्रर्थद्विजान्पृष्ट्वा क्रियतामिति तैरनुज्ञाते चरुमुद्धृत्यातिप्रणीतात्पश्चादुपविष्टस्तमर्चयित्वा इध्मं पितृतीर्थेन तूष्णीं तस्मिन्नग्नौ क्षिप्त्वा स्रुवेण ध्रुवाज्यमादाय मेक्षणमुपस्तीर्य उद्धृतचरुं द्विधा त्रिधा वा विभज्य मेक्षणेन यथाप्रवरं द्विवारं त्रिवारं वावदानधर्मेणादाय सोमाय पितृमते स्वाहा नम इत्यतिप्रणीताग्नेर्दक्षिणभागे पितृतीर्थेन हुत्वा सोमाय इदं न ममेति त्यजेत् । पुनस्तथैव दक्षिणभागादादायाग्नये कव्यवाहनाय स्वधा नम इत्यग्नेरुत्तरभागे हुत्वाग्नये कव्यवाहनायेदं न ममेति त्यक्त्वोपवीती मेक्षणं तूष्णीमग्नावनुप्रहृत्य परिवेषणाद्युत्तरापोशनदानार्थोदकदानान्तं पार्वणं कृत्वा द्विजैरुत्तरापोशने कृते पितृयज्ञचरुशेषमिश्रेण श्राद्धान्नशेषेण पिण्डार्थमुद्धृतेन मधुसर्पिस्तिलयुतं पूर्ववत् पिण्डषट्कं कृत्वा ध्रुवाज्येनाभिघार्य प्राचीनावीत्यन्वाचितवामजानुः पूर्वपरिस्तृतबर्हिषोः शुन्धन्तां पितर इत्या-

दिभिः षण्मन्त्रैराप्लावितकमण्डलुजलमाग्नेय्यपवर्गं पूर्ववन्निनीय पिण्डदानानुज्ञापनादिपुनरनुमन्त्रणान्तं कृत्वोपवीती चरुशेषमाघ्राय प्राचीनावीती पुनर्निनयनादिवासोदानान्तं कृत्वा कशिपूपबर्हणे निवेद्य पिण्डार्चनादिपिण्डप्रवाहणान्तं कृत्वा अग्नेतमद्याश्वन्नस्तोमैः क्रतुं न भद्रं हृदिस्पृशं हृद्यामात ओहैरितिमन्त्रेणौपासनाग्निं प्रक्षेत्य "यदन्तारिक्षं पृथिवीमुतद्यां यन्मातरं पितरं वा जिहिंसिम अग्निर्मातस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसम्" इतिमन्त्रेण गार्हपत्यपदरहितेनोपस्थाय पिण्डनमस्कारादिपिण्डनिक्षेपान्तं कृत्वा मध्यपिण्डद्वयं पत्नीं प्राशयेत्। "वीरं मे दत्त पितर" इत्यादाय पत्न्यै दद्यात्सा च "आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथायमरपा असत्" इतिमन्त्रेण वारद्वयं पठितेन क्रमेण पिण्डद्वयं प्राश्नीयात्। ततः श्राद्धकर्ता द्वन्द्वशो यज्ञपात्राण्युत्सृज्यावशिष्टं यज्ञपात्रं तृणेन छित्वं सम्पाद्योत्सृज्य गृह्याग्निपरिस्तरणानि विसृज्य गृह्याग्निमलङ्कुर्यात्। एवं पितृयज्ञं समाप्य ब्राह्मणानाचम्य विकिरदानादिश्राद्धशेषं समापयेत्। अत्र श्रपणहोमयोरधिकरणविकल्पमाहापस्तम्बः—

सोऽयमेवंविहित एवानाहिताग्नेरौपासने श्रपणं होमश्चातिप्रणीते वा जुहुयादिति।

अत्र व्याख्यातवान् रुद्रदत्तभाष्यकारः। अनाहिताग्नेर्दक्षिणाग्निस्थानीय औपासने श्रपणहोमौ भवतः। अथवा औपासन एव श्रपयित्वा ततोऽग्निं दक्षिणाप्राञ्चं प्रणीय तस्मिन् जुहुयादित्यर्थ इति। आश्वलायनैस्त्वतिप्रणीत एव होम इति बहुग्रन्थकारसम्मतात् "अतिप्रणीतेऽग्नाविध्ममुपसमाधाय मेक्षणेनादायावदानसम्पदा जुहुयात्" इति गृह्यपरिशिष्टाच्चास्मन्मातुः प्रपितामहभट्टश्रीनारायणपदपाथोजाभिधानाच्चातिप्रणीत एव होमः कार्य

इति । अथवा स्वकुलवृद्धसम्प्रदायं विचार्य कार्यं इति । आहि-
ताग्नेस्तु दक्षिणाग्नावेव श्रपणं होमश्च। "आसादयेदभिघार्य स्था-
लीपाकम्" इति श्रौतसूत्रे वृत्तिकृता दक्षिणाग्नेः पश्चात्समापये-
दिति व्याख्यानादित्यलम् । इत्यौपासनाग्निमतः पिण्डपितृयज्ञ-
व्यतिषक्तदर्शश्राद्धप्रयोगः ।

अथ महालयोपयुक्ताः षोडशीश्लोकाः ।

आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ।
वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥
मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च पृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥

पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
धर्मपिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
उच्छिन्नकुलवंश्यानां येषां दाता कुले न हि ।
धर्मपिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥

एते श्लोका महालय पिण्डदानोत्तरमत्रपितरोमादयध्वमित्य-
स्मात्प्राक् पठनीयाः ।

वेणुसम्भवनिनादमोहिता गोपिकास्तटमुपेत्य यामुनम् ।
येन सार्धमरमन्त संभ्रमात्तं भजामि वसुदेवनन्दनम् ॥
प्रसङ्गादत्र शूद्राणां प्रयोगः श्राद्धकर्मणः ।
विलिख्यते विलोक्याथ तद्धर्मान्मुनिभाषितान् ॥

आचम्य पूर्वाह्णे तिथ्याद्युच्चार्य उत्तरीयोऽपसव्यं कृत्वास्मत्पितृपितामहप्रपितामहानाममुकगोत्राणाममुकदासानां वसुरुद्रादित्यस्वरूपाणां क्षयाहश्राद्धं पार्वणविधिना सदैवं सपिण्डमामेन हविषा दर्भवटौ सद्यः करिष्ये । दर्शादौ तु दर्शश्राद्धमित्याद्यूहः कार्यः । इति सङ्कल्प्यास्मत्पित्रादीनां श्राद्धे विश्वेदेवस्थाने त्वामहं निमन्त्रय इति दर्भवटौ सयवं कुशं दद्यात् । एवं सतिलं कुशं पितृपितामहप्रपितामहानाममुकगोत्राणां व०णां स्थाने त्वामहं निमन्त्रय इति द्वितीयदर्भवटौ दद्यात् । ततः अक्रोधनैरितिमन्त्रं पठित्वा पुरूरवार्द्रवसंज्ञकविश्वेदेवाः स्वागतमिति पृष्ट्वा पुरू०देवा इदं वः पाद्यमिति पाद्यं पादयोर्दद्यात् । एवमपसव्येन नामोच्चारणपूर्वकं पितृवटावपि दत्त्वा अपवित्रः पवित्रो वेति सर्वत्र श्राद्धद्रव्ये च कुशतोयं क्षिपेत् । ततोऽपसव्यं कृत्वा ।

तिला रक्षन्त्वसुरान्दर्भा रक्षन्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥

इति चतुर्दिक्षु तिलान्विकीर्य सव्येनामान्नादीनां पवित्रतास्त्वित्युच्चार्यापसव्येन त्रिर्देवताभ्यः पितृभ्यश्चेति जपेत् । ततस्तिथ्याद्युच्चार्यास्मत्पित्रादीनां दर्शे मातामहादीनां चेति विशेषः । उपक्रान्तं श्राद्धं करिष्ये इति सङ्कल्प्य दक्षिणं जान्वाच्य पुरूरवा०नामिदमासनं नम इति द्वौ कुशावासनार्थमुपकल्पयेत् । दैवे क्षणः क्रियतामिति कुशं हस्ते दत्त्वा ओं तथा प्राप्नोतु भवान् । एवमत्रापसव्यपूर्वक वामं जान्वाच्य पितृपितामहप्रपितामहानाममुकदासानाममुकगोत्राणामिदमासनं वः स्वधेति त्रीन्कुशान्वामभागे दद्यात् । पञ्चब्राह्मणपक्षे तु पितुरमुकदासस्यामुकगोत्रस्य वसुस्वरूपस्येति बोध्यम् । एवं पितामहप्रपितामहयोरपि पित्र्ये क्षणः क्रि०ततः सव्येन विश्वान्देवानावाहयिष्ये इत्युक्त्वा पुरोधसाचाहयेत्यनुज्ञातः "आगच्छन्तु महाभागा" इतिमन्त्रे-

ण तानावाहयेत् । एवमपसव्येनास्मत्पितृपितामहप्रपितामहान-मुकगोत्रान्वसुरुद्रादित्यस्वरूपानावाहयिष्ये इति सर्वं प्राग्वत् । ततः सव्यापसव्याभ्यां गन्धादियुक्तमर्घ्यमेष वोऽर्घो नम इति देव-पात्रे निवेद्य गन्धादिभिर्देवपितृपूजां निर्वर्त्य द्विगुणमामान्नपसम-र्थः समं वाऽऽदौ विश्वेदेवाग्रे निधाय विष्णो हव्यं रक्षस्व पुरू-रवा०देवाः इदं च आमान्नं सपरिकरं गयेयं भूर्गदाधरो भोक्ताहं च ब्रह्म ग्रहीता ब्रह्मस्वरूपमामं मनःकल्पितं सुवर्णपात्रस्थमक्षय्य-वटच्छायास्थं पुरूर० देवेभ्योऽक्षय्यतृप्त्यर्थं सम्प्रददे स्वाहा नमो न मम गयागदाधरः प्रीतो भवतु । ततोऽपसव्येनामुकगोत्रा अ-स्मत्पितृपितामहप्रपितामहा अमुकदासा वसुरुद्रादित्यस्वरूपा एतद्व-आमान्नं सपरिकरं गयेयं भूर्गदाधरो भोक्ताहं च ब्रह्म ग्रहीता ब्रह्म-स्वरूपमामं मनःकल्पितं रजतपात्रस्थमक्षय्यवटच्छायास्थं पितृपिता महप्रपितामहेभ्योऽमुकदासेभ्योऽमुकगोत्रेभ्यो वसुरुद्रादित्यस्व-रूपेभ्य इदमामं सोपस्करमक्षय्यतृप्त्यर्थं सम्प्रददे स्वधा नमो न मम अमृतरूपेण स्वधा सम्पद्यतां कव्यं नमः । दत्तमक्षय्यमस्तु गयाग० ततोऽसंस्कृतप्रमीतेभ्य एष पिण्ड इति विकिरं निक्षि-प्यामपिण्डं सोदकं अग्निदग्धेभ्योऽनग्निदग्धेभ्यश्चैव उच्छिष्टपि-ण्डो नम इतिकुशेषु दत्त्वा मध्विवतित्रिवारं जपेत् । ततः पिण्डार्थं वेदिं कृत्वा वामं जान्वाच्यापसव्येन दर्भमूलेन दक्षिणाग्रां लेखा-मुल्लिख्य तस्यां कुशानास्तीर्य मध्वाज्ययुक्तान् पिण्डान् पितृती-र्थेन अमुकगोत्रास्मत्पितः अमुकदास वसुरूप एष ते पिण्डो नमः अमु० अस्मत्पितामह अमुकदास रुद्ररूप एष०अमु०अस्मत्प्रपि०ह अमुकदास आदित्यरूप एष०नम इति दद्यात् । ततः पिण्डेषु सूत्रं समर्प्य चन्दनादिदक्षिणान्तैरुपचारैस्तान् सम्पूजयेत् । ततः सुप्रोक्षितमस्त्विति देवपित्रोः करे जलं दत्त्वा सव्येन पुरूरवार्द्र-वसंज्ञकेभ्यो देवेभ्यो यद्दत्तं श्राद्धीयमामादि तदक्षय्यमस्तु । एव-

मपसव्येन नामगोत्राद्युच्चार्यास्मत्पितृपितामहप्रपितामहेभ्यो यद्दत्तमिति प्राग्वत् । ततः पित्रादिभ्यः स्वधोच्यताम् अस्तु स्वधेति पुरोधाः । ततो देवपित्रोः सुवर्णरजते श्राद्धसाद्गुण्यार्थं दक्षिणाः पान्तु इति दक्षिणां दत्त्वा उत्तिष्ठत पितरो विश्वेदेवैः सहेत्युद्वास्य सर्वं नद्यां प्रक्षिप्य पुरोधसं प्रदक्षिणीकृत्य प्रणम्य च दक्षिणादिदानेन तोषयेत् । ततः—

आमान्नेन तु शूद्राणां तूष्णीं तु द्विजपूजनम् ।
कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेदथ ॥

इति वृद्धपराशरवाक्यात्सजातिभ्यो भोजनं दत्त्वा स्वयं सुहृद्युक्तः सकृदेव भुञ्जीत ।

इति शूद्रश्राद्धप्रयोगः ।

अथ अमृतदानविधिः ।

हेमाद्रौ भविष्ये—

तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ।
दन्तपत्रान्वितां रम्यां हेमपट्टैरलङ्कृताम् ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानिकाम् ।
प्रच्छादनपटीगन्धधूपदीपाधिवासिताम् ॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ।
मृतशय्यायां हरिस्थाने प्रेतमिति विशेषः ।
उच्छीर्षके घृतभृतं कलशं परिकल्पितम् ॥
ताम्बूलकुङ्कुमक्षोदकर्पूरागरुचन्दनम् ।
दीपकोपानहच्छत्रचामरासनभाजनम् ॥
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि ।
शयनस्थस्य भवति यदन्यदुपकारकम् ॥
भृङ्गारकरकाद्यं तु पञ्चवर्णं वितानकम् ।

मन्त्रस्तु—

यथा न कृष्ण ! शयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥
शय्या ममाप्यशू०
दत्त्वैवं तस्य सकलं प्राणिपत्य विसर्जयेत् ।
एकादशाहेऽपि तथा विधिरेष प्रकीर्त्तितः ।
विशेषं चात्र राजेन्द्र ! कथ्यमानं निशामय ॥
तेनोपभुक्तं यत्किञ्चिद्वस्त्रवाहनभाजनम् ।
यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् ॥
तमेवं पुरुषं हैमं तस्यां संस्थापयेत्तदा ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥

पाद्मभमात्स्ययोः--

मृतकान्ते द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणाम् ।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् ॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषितम् ।
उपवेश्य तु शयायां मधुपर्कं ततो वदेत् ॥
वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा । इति ।

शय्यादानफलं भविष्ये—

स्वर्गे पुरन्दरपुरे सूर्यपुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ॥
पीडयन्ति न तं याम्याः पुरुषा भीषणाननाः ।
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ॥
अपि पापविनिर्मुक्तः स्वर्गलोकं स गच्छति ।
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ॥
आभूतसम्प्लवं यावत्तिष्ठत्यातङ्कवर्जितः । इति ।

अथ प्रयोगः ।

तण्डुलादिचूर्णनिर्मितेऽष्टदले तिलप्रस्थं निधाय तस्मिन् स्वास्तीर्णशय्यायाः समन्तान्मूलवाक्योक्तानि कुम्भादीनि संस्थाप्य ॐअद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपूर्वकाप्सरोगणसेवायुतविमानारोहणपूर्वकेन्द्रपुरगमनोत्तरषष्टिसहस्रवर्षतदधिकरणकक्रीडनस्त्रीहस्तसम्वरणसहितस्वर्गलोकमहितत्वतदुत्तरषष्टियोजनमण्डलराज्यानन्तरपरब्रह्मैक्यकामः प्रेतशय्यां दास्ये इति सङ्कल्प्य सपत्नीकं विप्रं शय्यां तण्डुलोपरि सुवर्णप्रतिमायां प्रेतं च सपूज्य शय्यां प्रदक्षिणीकृत्य नमः प्रमाण्यै देव्यै इति चतुर्दिक्षु प्रणम्य तिथ्याद्युल्लिख्यामुकगोत्रस्येत्यादिकामान्तं पूर्वोक्तं सङ्कल्पवाक्यं पठित्वामुकगोत्रायामुकशर्मणे ब्राह्मणाय सपत्नीकायेमां शय्यामीशानादिकोणचतुष्टयसंस्थापितघृतकुङ्कुमगोधूमजलपूर्णपात्रामुच्छीर्षकप्रदेशस्थापितघृतपूर्णकलशां हंसतुलीप्रच्छन्नां शुभगण्डोपधानिकां प्रच्छादनपटीसप्तधान्यताम्बूलादर्शकुङ्कुमक्षोदकर्पूरागुरुचन्दनदीपिकोपानच्छत्रासनचामरव्यजनभोजनजलपात्रपञ्चवर्णवितानप्रेतप्रतिमायुतामङ्गिरोदेवताममुकगोत्रोऽमुकशर्माहं सम्प्रददे न ममेति शय्योपवेशितद्विजहस्ते कुशोदकं क्षिपेत् । तत इमं मन्त्रं पठेत्--

यथा न कृष्ण ! शयनं शून्यं सागरजातया ।<br>
शय्या तस्याप्यशून्यास्तु तथा जन्मनि ॥<br>
यस्मादशून्यं शयनं केशवस्य शिवस्य च ।<br>
शय्या तस्याप्य० तस्य प्रेतस्येत्यर्थः ।

अनन्तरं हिरण्यं दक्षिणां दत्त्वा प्रणिपत्य विप्रं विसर्जयेत् ।

इति प्रेतशय्यादानप्रयोगः ॥

अथ प्रसङ्गात्सुखशय्यादानप्रयोगो लिख्यते ।

तण्डुलादिचूर्णनिर्मिताष्टदले प्रस्थसम्मितान् तिलान्क्षिप्त्वा तत्र शय्यां सोपस्करां स्वास्तीर्य सुमुखश्चेत्यादिगणपतिस्मरणपूर्वकं सङ्कल्पवाक्यमुक्त्वा सर्वपापक्षयपूर्वकाप्सरोगणसेवायुतविमानारोहणपूर्वकेन्द्रपुरगमनोत्तरषष्टिवर्षतदधिकरणकक्रीडनस्त्रीसहस्रसम्वरणसहितस्वर्लोकमहितत्वतदुत्तरषष्टियोजनमण्डलराज्यानन्तरपरब्रह्मैक्यकामोऽमुकगोत्रोऽमुकशर्माहं शय्यादानं करिष्ये इति सङ्कल्प गणेशं सम्पूज्य सपत्नीकं विप्रं वस्त्रादिचन्दनाभूषणान्तेनोपचारेण सम्पूज्य ततः शय्यां तदुपरि सुवर्णप्रतिमायां लक्ष्मीनारायणं च सम्पूज्य तां प्रदक्षिणीकृत्य नमः प्रमाण्यै देव्यै इति चतुर्दिक्षु प्रणम्य तिथ्याद्युल्लेखनान्ते सर्वपापक्षयेत्यादिकामान्तं पूर्वोक्तं सङ्कल्पवाक्यमुक्त्वामुकगोत्रायामुकशर्मणे ब्राह्मणाय सपत्नीकायेमां शय्यामीशानादीतिपूर्ववत् ।

मन्त्रः—

यथा न कृष्ण ! शयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ।

शय्या ममाप्य० हिरण्यं दक्षिणां दत्त्वा ब्राह्मणभोजनं भूयसीं च सङ्कल्पयेदिति दिक् ।

भारद्वाजकुलोदधौ समभवच्छ्रीबालकृष्णाभिधः
सोमो लाञ्छनवर्जितः प्रतिदिनं सन्तोषकृद्विद्वताम् ॥
तत्सूनुः प्रथमो महामणिरिव (१)श्रीमान्महादेव इ-
त्यासीच्छैवपुरे विमुक्तिफलदे गङ्गातरङ्गाकुले ॥ १ ॥
तत्पुत्रेण दिवाकरेण विदुषा निष्पादितां चन्द्रिकां

---

(१) प्रख्यातकीर्तिर्गुणैरासीच्छास्त्रवने मृगेन्द्ररचनो नाम्ना महादेवकः । इति द्वि० पु० पाठः ।

त्यक्त्वाहङ्कृतिमुन्नतां स्वम
यद्यस्ति स्वयमेतदीयकृतितो
स्तर्ह्येवं निपुणं विभाव्य हृद
उक्तं नात्र मया स्वयं स्वरा
प्रोक्तं श्राद्धविनिर्णये तदखि
सन्दिष्टं गुरुदत्तमन्त्रकृपया
तेन श्रीरविमण्डलान्तरगतो

इति श्रीभारद्वाजमहादेवभट्टात्मज
शास्त्रसुधानिधौ श्राद्धचन्द्रिका

